# प्राकृतप्रकाशः ।

महामहोपाध्याय

श्रीवररुचिकृतः ।

पण्डितवर-श्रीभामहकृतमनोरमावृत्तिसहितः ।

पण्डितकुलपति-

श्रीमज्जीवानन्दविद्यासागरपौत्रः

एम्, ए, वि, एल, इत्युपाधिकः

श्रीपञ्चाननभट्टाचार्य्येण विरचितया

मञ्जुलाख्यया व्याख्यया समन्वितः ।

तेनैव

सम्पादितः, संशोधितः प्रकाशितश्च ।

कलिकातामहानगर्य्याम्

सिद्धेश्वरयन्त्रे

मुद्रितः ।

इं १९२२ ।



[illegible]मुद्राः ।

# विज्ञापनम् ।

प्राकृतप्रकाशाख्यं नाम प्राकृतभाषाव्याकरणं प्राक् शर्म्मण्य-देशे तत्रत्यैः संस्कृतज्ञैः कोविदैर्मुद्रापितमभूत् । वररुचिनेदं निरमायि, भामहेनास्य वृत्तिर्व्यधायीति । व्याकरणमिदं मञ्जुलाख्यया मत्प्रणीतया व्याख्यया सहितं मुद्रापयित्वा प्रकाशयितुं प्रास्तूयते मया ।

अस्मिन् प्राकृतप्रकाशे द्वादश परिच्छेदाः सन्ति । तेषु एकादशसु परिच्छेदेषु भामहकृता वृत्तिर्दृश्यते, न तु द्वादशे परिच्छेदे ।

द्वादशपरिच्छेदस्य भामहकृताया वृत्तेरलब्धतया मयैव यथामति तस्य वृत्तिरपि विरचिता । चेदस्य पठनपाठनाकार्य्यें परीक्षार्थिनां छात्राणां विदुषामध्यापकानाञ्च कथञ्चित् किञ्चित् साहाय्यं भवेत्, तर्हि मे व्याख्याकरणस्य वृत्तिकरणस्य च श्रमः सफलतामियादित्यलं वाक्प्रपञ्चेन ।

श्रीपञ्चानन शर्म्मणः ।

# शुद्धिपत्रम् ।

| पृष्ठाङ्क | पङ्क्ति | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| ६ | ५ | विच्छुओ | विंछुओ । |
| ८ | ४ | विछुओ । किवा | विंछुओ । किबा । |
| १० | १७ | सन्निवेशित: | सन्निवेशितम् । |
| २१ | ४ | अङ्कुरो | अङ्कुरी । |
| ३५ | १५ | विञ्छुओ | विंछुओ । |
| ५८ | ८ | जस्-शस्-ङस्यां सु दीर्घः | जस्-शस्-ङस्यांसु दीर्घः । |
| ६० | १२ | वायुणो | वाउणो । |
| ७० | ३ | इदिणा | एदिणा । |
| ८६ | ६ | हसेऊण | हसेउण । |

२ पृष्ठायां २५ पंक्तौ "दृश्यते" इत्यस्य परं "तत्तु 'सि च' ३।२७) इत्यनेन सूत्रेणैव सम्भवति" इति पठितव्यम् ।

# प्राकृतप्रकाशः ।

## प्रथमः परिच्छेदः ।

### वृत्तिकृतो मङ्गलाचरणम् ।

जयति मदमुदितमधुकरमधुररुताकलनकूणितापाङ्गः ।
करविहितगण्डकण्डूविनोदसुखितो गणाधिपतिः ॥१॥ *

वररुचिरचित-प्राकृतलक्षणसूत्राणि लक्ष्यमार्गेण ।
बुद्ध्वा चकार वृत्तिं संक्षिप्तां भामहः स्पष्टाम् ॥२॥ †

---

प्रणम्य परमात्मानं श्रीपञ्चाननशर्म्मणा ।
प्राञ्जला क्रियते व्याख्या मञ्जुलाख्या यथामति ॥

* वृत्तिकृतो मङ्गलाचरणमाह, जयतीत्यादि।—मदेन दानवारिणा, ("दानं मदः" इत्यमरः) मुदिता हृष्टा, ये मधुकरा भ्रमरास्तेषां मधुराणि ललितानि, कर्णसुखकराणीति यावत्, यानि रुतानि शब्दाः, [रौतेर्नपुंसके भावे क्तः] तेषामाकलनं श्रवणं, तेन कूणितौ सङ्कुचितौ, मुद्रिताविति यावत्, अपाङ्गौ नेत्रयोरन्तौ ("अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः") यस्य स तथोक्तः, मदमत्त-गुञ्जद्भ्रमररवश्रवणमुद्रितलोचनः सन्नित्यर्थः, तथा करेण स्वस्य गजाननत्वात् शुण्डादण्डेन, विहितः कृतः, यो गण्डस्य कपोलस्य, कण्डूविनोदः कण्डूतिप्रमोदः, घर्षणक्रीडेति यावत्, तेन सुखितः सञ्जातसुखः । "तदस्य सञ्जातम्—" (५।२।३६ पा०) इति तारकादित्वादितच्। गणाधिपतिः, गणेशः, जयतु सर्वोत्कर्षेण वर्त्तताम्, [जयतेर्लोट् स्तुप स्थाने तिप्]। सर्वविघ्नविनाशकत्वेन सिद्धिदातृत्वेन च गणपतिप्रणतिरूपमङ्गलमेव आदौ युक्तम् ।

† अथ तावत् वृत्तिकारस्य परिचयमुपक्षिपति, वररुचीत्यादि।—भामह इत्याख्यः प्राकृतभाषातत्त्ववित् कश्चित् पण्डितः, लक्ष्यमार्गेण लक्ष्यस्य मार्गस्तेन लक्ष्यपथेन करणेन, वररुचिना नवानां रत्नानामन्यतमेन प्रसिद्धेन केनचित् विदुषा, रचि-

**आदेरतः ॥ १ ॥**

अधिकारोऽयम् । यदित ऊर्द्ध्वमनुक्रमिष्यामः आदेरतः स्थाने तद्भवतीत्येवं वेदितव्यम् । आदेरित्येतद् आ परिच्छेद-समाप्तेः । अत इति च आ अकारविधानात् । अत इति तकारग्रहणं सवर्णनिवृत्त्यर्थम् । *

**आ समृद्ध्यादिषु वा ॥ २ ॥**

समृद्धि इत्येवमादिषु शब्देष्वादेरकारस्य आकारो भवति वा । समिद्धी, सामिद्धी । पअडं, पाअडं । अहिजाई, आहि-जाई । मणंसिणी, माणंसिणी । पड़िवआ, पाड़िवआ । सरिच्छं, सारिच्छं । पड़िसिद्धी, पाडिसिद्धी । पसुत्तं, पासुत्तं । पसिद्धी, पासिद्धी । अस्सो, आस्सो ।

( समृद्धिः । प्रकटम् । अभिजातिः । मनस्विनी । प्रतिपत् । सदृक्षम् । प्रतिषिद्धि । प्रसुप्तम् । प्रसिद्धिः । अश्वः । ) आकृति-गणोऽयम् । †

---

तानि निर्म्मितानि, यानि प्राकृताना प्रकृत्या निर्वृत्ताना भाषाविशेषाणा, लक्षणानि ज्ञापकचिह्नानि, तेषा सूत्राणि बुद्ध्वा ज्ञात्वा, लक्ष्येण लक्षणानि ज्ञानविषयीकृत्येति यावत्, संक्षिप्ता बाहुल्यप्रतिषेधिकामविस्तृतामित्यर्थ, अथच स्पष्टां सुबोधा काठिन्यादिदोषराहित्यात् सरलामिति यावत्, वृत्ति सूत्रव्याख्या, चकार प्रणिनाय । लक्ष्यनिर्देशं विना लक्षण न सम्भवतीत्यतो लक्ष्यनिर्देशपूर्वक लक्षणसूत्राणां स्पष्टी-करणाय विद्वद्वरेण भामहेन स्वल्पा सरला च व्याख्या निरमायीति भाव. ।

* इत ऊर्द्ध्वमत परम्, अनुक्रमिष्याम अनुक्रम कथयिष्याम' । आदिस्थितस्य अकारस्य स्थाने तत् कार्य्यं भवतीति ज्ञातव्यम् । आ परिच्छेदसमाप्तेः प्रथमपरिच्छेद-समाप्तिपर्य्यन्तम् । आ अकारविधानात् अकारविधानपर्य्यन्तम् । सवर्णनिवृत्त्यर्थम् अर्थात केवलस्य अकारस्यैव, न तु आकारस्येत्यर्थः ।

† क्वचित "प्रतिषिद्धि" इत्यत्र "प्रतिस्पर्द्धिन्" इत्यनुवादो दृश्यते । आकृ-तीति ।—आकृतिगणत्वात् अन्येऽपि शब्दा ग्राह्या इति भाव ।

## इदीषत्पक्वस्वप्नवेतसव्यजनमृदङ्गाऽङ्गारेषु ॥३॥

ईषदादिषु शब्देषु आदेरतः स्थाने इकारादेशो भवति। वेति निवृत्तम्। इसि। पिक्कं। सिविणो। वेड़िसो। विअणो। मुइंगो। इंगालो। *

## लोपोऽरण्ये ॥ ४ ॥

अरण्यशब्दे परे आदेरतो लोपो भवति। रणं। †

## ए शय्यादिषु ॥ ५ ॥

शय्या इत्येवमादिषु शब्देषु आदेरत एकारादेशो भवति। सेज्जा। सुंदेरं। उक्केरो। तेरहो। अच्छेरं। पेरन्तं। वेल्ली। (शय्या। सौन्दर्य्यम्। उत्करः। त्रयोदश। आश्चर्य्यम्। पर्य्यन्तम्। वल्ली। (वल्लिः)।)

## ओ बदरे देन ॥ ६ ॥

बदरशब्दे दकारेण सहादेरत ओत्वं भवति। बोरं। ‡

## लवणनवमल्लिकयोर्वेन ॥ ७ ॥

---

* सूत्रमध्य एव ईषदादीना सन्निवेशात न पुन प्राकृतशब्दाना संस्कृतं कृतम्, सूत्रपाठेनैव शब्दज्ञानोपपत्तेरिति। इसीति।—आदौ ईकारस्य ह्रस्व', तत' अकारस्य इकार, तत षस्थाने स, पश्चात् अन्तस्थितस्य व्यञ्जनस्य लोप इति। एव पिक्कमित्यादीनामपि पृथक् पृथक् सूत्रे पृथक् पृथक् कार्य्येण सिद्धिरप्यवगन्तव्या।

† रणमिति।—रणमित्यादीना पदसाधनपद्धतिस्तु सूत्रज्ञानेनैव ज्ञेयेति न सर्वेषाम्। सर्वत्र पदानि सूत्राण्युद्धृत्य दर्शितानि।

‡ षष्ठसप्तमाष्टमनवमेष्विति चतुर्षु सूत्रेषु बदरलवणनवमल्लिकामयूरमयूखचतुर्थीचतुर्दशीनामिति सप्ताना संस्कृताना शब्दाना परिगृहीततया प्राकृतशब्दोदाहरणदर्शनादनन्तर संस्कृतशब्दप्रत्युदाहरणानि न पुनर्दर्शितानि।

लवणनवमल्लिकयोरादेरतो वकारेण सह ओकारः स्यात् । लोणं । णोमल्लिआ ।

## मयूरमयूखयोर्य्वा वा ॥ ८ ॥

मयूर मयूख इत्येतयोर्य्ूशब्देन सहादेरत ओत्वं वा भवति । मोरो, मऊरो । मोहो, मऊहो ।

## चतुर्थीचतुर्दश्योस्तुना ॥ ९ ॥

एतयोस्तुना सहादेरत ओत्व भवति वा । चोत्थो, चउत्थो । चोद्दही, चउद्दही । *

## अदातो यथादिषु वा ॥ १० ॥

अत इति निवृत्तं स्थान्यन्तरनिर्देशात् । यथा इत्येवमादिषु आतः स्थाने अकारादेशो भवति वा । जह, जहा । तह, तहा । पत्थरो, पत्थारो । पउअं, पाउअं । तलवेण्टअं, तालवेण्टअं । उक्खअं, उक्खाअं । चमरं, चामरं । पहरो, पहारो । चडु, चाडु । दवग्गो, दावग्गो । खइअं, खाइअं । संठविअं, संठाविअं । हलिओ, हालिओ । †

( यथा । तथा । प्रस्तारः । प्राकृतम् । तालवृन्तकम् । उत्खातम् । चामरम् । प्रहारः । चाटु । दावाग्निः । खादितम् । संस्थापितम् । हालिकः । )

---

* चोत्थीति ।—पदसाधनप्रणाली सूत्रज्ञानेनैव विवेचनीया, अतो न सर्वत्र पदानि ससूत्र साधितानीति ।

† स्थान्यन्तरनिर्देशादिति ।—"आदेश स्थानिवत क्वचित्" इति न्यायात् यस्य स्थाने य आदेशो भवति, स स्थानीति कथ्यते । गमधातो स्थाने गच्छादेशो भवति, अतो गच्छादेशो गम्धातो स्थानीयतया प्रसिद्धिमुपागतः । अन्य' स्थानी स्थान्यन्तर "मयूरव्यंसकादयश्च" ( २।१।७२ पा० ) इति मयूरव्यंसकादित्वात् निपातनात् समास , तस्य निर्देशस्तस्मात्, अन्यस्य स्थानिन कथनादित्यर्थे ।

## इत् सदादिषु ॥ ११ ॥

सदा इत्येवमादिषु आत इकारो भवति वा । सइ, सआ । तइ, तआ । जइ, जआ ।

( सदा । तदा । यदा । )

## इत एत् पिण्डसमेषु ॥ १२ ॥

पिण्ड इत्येवं समेषु इकारस्य एकारादेशो भवति वा । पेण्डं, पिण्डं । णेद्दा, णिद्दा । सेंदूरं, सिंदूरं । धम्मेल्लं, धम्मिल्लं । चेंधं, चिंधं । वेण्हू, विण्हू । पेट्ठं, पिट्ठं ।

( पिण्डम्, निद्रा, सिन्दूरम्, धम्मिल्ल., चिह्नम्, विष्णुः, पिष्टम् । ) समग्रहणं संयोगपरस्योपलक्षणार्थम् । *

## अत् पथिहरिद्रापृथिवीषु ॥ १३ ॥

पथ्यादिषु शब्देषु इकारस्य अकारो भवति । पहो । हलद्दा । पुहवी ।

## इतेस्तः पदादेः ॥ १४ ॥

पदादेरिति शब्दस्य यस्तकारस्तस्मात् परस्य इकारस्य अकारो भवति । इअ उअह असह अअण ( इति पश्यत्य-

---

इत पूर्वं यानि यानि सूत्राणि कृतानि, तैस्तैः सूत्रैर्ये ये आदेशा अभिहिता, ते तु अकारस्य स्थाने एव, इत परमाकारस्य स्थाने सूत्रविहितकार्य्यस्य विधास्यमानत्वात् "अत इति निवृत्तम्" इत्युक्तम् । आदौ अकारस्य स्थाने, इत परमाकारस्य स्थाने कार्य्यविधानादित्यनयोर्विशेष । हालिक इति हलकर्षणशील: । हलाट्ठञ् ।

* इत्येवं समेषु—पिण्डतुल्येषु संयुक्तेषु शब्देष्वित्यर्थः । इममेवार्थं स्वयमेव वृत्तिकार स्पष्टीकरोति समग्रहणमित्यादिना ग्रन्थेन । समग्रहणं—सूत्रे समशब्दस्य निर्देश इत्यर्थ । संयोगपरस्योपलक्षणार्थमिति ।—संयोगपरस्य संयुक्तस्य शब्दस्य, उपलक्षणार्थं ज्ञापनार्थमित्यर्थः ।

न्यथावचनम।) इअ दिअसतीउ चिरं (इति विकसन्त्य-श्चिरम्।) पदादेरिति वचनादिह न भवति। पिओत्ति। (प्रिय इति।) *

**उदिक्षुवृश्चिकयोः॥ १५॥**

इक्षुवृश्चिकयोरित उत्वं भवति। उच्छू। विच्छुओ।

**ओ च द्विधा कृञः॥ १६॥**

कृञ्‌धातुप्रयोगे द्विधाशब्दस्य ओकारो भवति। चकारा दुत्वञ्च। द्विधाकृतम्। दोहाइअं—दुहाइअं। द्विधाक्रियते। दोहाइज्जइ—दुहाइज्जइ। †

**ईत् सिंहजिह्वयोश्च॥ १७॥**

एतयोरादेरिकारस्य ईकारो भवति। सीहो। जीहा। चकारोऽनुक्तसमुच्चयार्थः। तेन वीसत्थ वीसंभ इत्येवमादिषु ईत्वं भवति।

(विश्वस्तः विस्रम्भः।) ‡

**इदीतः पानीयादिषु॥ १८॥**

पानीय इत्येवमादिष्वादेरीकारस्य इकारो भवति। पाणिअं। अलिअं। तआणिं। करिसो। दुइअं। तइअं। गहिरं।

---

* सूत्रे पदादेरिति ग्रहणात पदान्तस्य इतिशब्दस्य स्थाने अकारादेशो न भवतीत्ययमेवार्थ सुतरामायाति।

† कृञ इति।—सूत्रमध्ये कृधातोर्ग्रहणात् अन्यैर्धातुभिर्योगे,द्विधाशब्दस्य इकार-स्थाने ओकारादेशो भवति, चकारादुकारश्च, तेन प्रयोगद्वय दर्शितमिति भाव।

‡ चकार इति।—सूत्रे चशब्दनिर्देशात् अनुक्ता अपि शब्दा परिगृहीता इति बोद्धव्यम्। तेन विश्वस्तविस्रम्भादीनामपि शब्दानामिकारस्य ईत्व भवतीति भाव।

( पानीयम्। अलीकम्—व्यलीकम्। तदानीम्। करीषः। द्वितीयम्। तृतीयम्। गभीरम्। )

## एन्नीड़ापीड़कीदृगीदृशेषु ॥ १९ ॥

नीडादिषु ईकारस्य एकारो भवति। णेड्डं। आमेलो। केरिसो। एरिसो। *

## उत ओत् तुण्डरूपेषु ॥ २० ॥

तुण्ड इत्येवं रूपेषु आदेरुकारस्य ओकारो भवति। तोण्डं। मोत्ता। पोक्खरो। पोत्थओ। लोद्धओ। कोट्टिमं।

(तुण्डम्। मुक्ता। पुष्करम्। पुस्तकम्। लुब्धकः। कुट्टिमम्।)

रूपग्रहणं संयोगपरोपलक्षणार्थम्। †

## उलूखले ल्वा वा ॥ २१ ॥

उलूखलशब्दे लूशब्देन सह उकारस्य ओकारो भवति वा। ओखलं। उलूखलम्।

## अन्मुकुटादिषु ॥ २२ ॥

मुकुट इत्येवमादिष्वादेरुकारस्य स्थाने अकारो भवति। मउडं। मउलं। गरुअं। गरुई। जहिट्ठिलो। सोअमल्लं। अवरि। ‡

---

* "आपीडे म" इति द्वितीयपरिच्छेदे षोडशसूत्रेण पकारस्य मकारः। अनेन तु सूत्रेण ईकारस्थाने एकारादेशः स्यादिति बोद्धव्यम्।

† इत्येव रूपेष्विति।—इत्येवमीदृशं रूपं येषां ते तथोक्तेषु, तुण्डशब्दवत् संयुक्तेषु शब्देष्वित्यर्थः। इममेवार्थं वृत्तिकारः स्वयमेव स्पष्टीकरोति रूपग्रहण-मित्यादिना। रूपग्रहणमिति।—रूपस्य ग्रहणं निर्देशः, संयोगपरोपलक्षणार्थं—संयुक्तशब्दज्ञापनार्थम्, तेन मुक्तापुष्करादीनि प्रत्युदाहृतानीति ज्ञेयमिति भावः।

‡ मउडमिति।—अनेन सूत्रेण उकारस्य अकारः, पश्चात् "टो डः" इति द्वितीयपरिच्छेदे विंशतिसंख्यकसूत्रेण अनादिवर्त्तिनष्टकारस्य डकारः इति ज्ञेयम्।

( मुकुटम्। मुकुलम्। गुरु। गुर्वी। युधिष्ठिरः। सौकुमार्य्यम्। उपरि। )

**इत् पुरुषे रोः॥ २३॥**

पुरुषशब्दे यो रेफस्तस्य उकारस्य इकारो भवति। पुरिसो।

**उदूतो मधूके॥ २४॥**

मधूकशब्दे ऊकारस्य उकारो भवति। महुअं।

**अद् दुकूले वा लस्य द्वित्वम्॥ २५॥**

दुकूलशब्दे ऊकारस्य अकारो भवति वा। तत्सयोगेन लकारस्य द्वित्वम्। दुअल्लं—दुऊलं। *

**एन्नूपुरे॥ २६॥**

नूपुरशब्दे ऊकारस्य एकारो भवति। णेउर।

**ऋतोऽत्॥ २७॥**

आदेर्ऋकारस्य अकारो भवति। तण। घणा। मअं। कअं। बढ्ढो। वसहो।

( तृणम्। घृणा। मृतम्। कृतम्। वृद्धः। वृषभः। ) †

**इदृष्यादिषु॥ २८॥**

---

* तत्संयोगेनेति।—आदौ दुकूलशब्दस्य ऊकारस्थाने विकल्पेन अकारादेशो भवति, तस्य अकारस्य, सयोगेन सम्पर्केण, सम्बन्धेनेति यावत्, लकारस्य दुकूलशब्दस्थितस्येति शेष, द्वित—द्विरुक्तिर्भवति, यदैव अकारस्तदैव द्विरुक्तिरिति तात्पर्य्यम्।

† मअमिति।—आदौ अनेन सूत्रेण ऋकारस्थाने अकार', पश्चात् "कगचजतदपयवां प्रायो लोप" इति द्वितीयपरिच्छेदस्य द्वितीयेन सूत्रेण अन्तस्थितस्य तकारस्य बाहुल्यवशाल्लोपो भवति।

ऋष्यादिषु शब्देषु आदेर्ऋकारस्य इकारो भवति। इसी। बिसी। गिट्ठि। दिट्ठि। सिट्ठि। सिंगारो। मिअंको। भिंगो। भिंगारो। हिअअं। बिइण्हो। बिहिअं। किसरो। किच्चा। बिंछुओ। सिआलो। किई। किसी। किवा।

(ऋषिः। वृषो। गृष्टिः। दृष्टिः। सृष्टिः। शृङ्गारः। मृगाङ्कः। भृङ्ग। भृङ्गारः। हृदयम्। वितृष्णः। वृंहितम्। कृशरः। कृत्या। वृश्चिकः। शृगाल। कृतिः। कृषिः। कृपा।) *

उदृत्वादिषु ॥ २९ ॥

ऋतु इत्येवमादिषु आदेर्ऋत उकारो भवति। उदू। मुणालो। पुहबी। बुंदावणं। पाउसो। पउत्ती। बिउदं। सबुदं। णिव्वुदं। बुत्ततो। परहुओ। माउओ। जामाउओ।

(ऋतुः। मृणालम्। पृथिवी। वृन्दावनम्। प्रावृष्। प्रवृत्तिः। विवृतम्। संवृतम्। निर्वृतम्। वृत्तान्तः। परभृतः। मातृकः। जामातृकः इत्येवमादयः।)

अयुक्तस्य रिः ॥ ३० ॥ †

वर्णान्तरेणायुक्तस्य आदेर्ऋकारस्य रिकारो भवति। रिणं। रिद्धो। रिच्छो।

---

* इदृष्यादिष्वित्यादिना क्वचिद् युक्तस्यापीत्यन्तेन ग्रन्थेन ऋष्यादीना ऋत्वादीनाम् अयुक्ताना संयोगशून्याना शब्दाना क्वचित् संयुक्तानाञ्च शब्दानाम् आदिस्थितस्य ऋकारस्य इकार उकार रिकारश्चेति आदेशत्रय भवतीति प्रयोगानुसारेण तेषामुदाहरणानि ज्ञेयानीति भाव। ऋष्यादिभि सह ऋत्वादीना प्रभेद, पुनरपि ऋष्यादिभि ऋत्वादिभिश्च सह संयुक्तानामृकारादीना शब्दाना पार्थक्यमुन्नेयम्, तथा संयुक्तेन ऋकारादिना शब्देन सह क्वचित संयुक्तस्य ऋकारादेश्च ऐक्यमिति सर्वमवदातम्।

† "अयुक्तस्य रि" इत्यत्र "ऋ रीति" इति पाठान्तरम्।

( ऋणम्। ऋजुः। ऋष्यः। )

**क्वचिद् युक्तस्यापि ॥ ३१ ॥ ***

वर्णान्तरेण युक्तस्यापि क्वचित् ऋकारस्य रिकारो भवति। एरिसो। सरिसो। तारिसो।

( ईदृशः। सदृशः। तादृशः। )

**वृक्षे वेन रुर्वा ॥ ३२ ॥**

वृक्षशब्दे वशब्देन सह ऋकारस्य रुकारो भवति वा। रुक्खो। वच्छो। व्यवस्थितविभाषाज्ञापनात् छत्वपक्षे न भवति। खत्वपक्षे तु नित्यमेव भवति। †

**ऌतः क्लृप्ते इलिः ॥ ३३ ॥**

क्लृप्तशब्दे ऌकारस्य इलीत्ययमादेशो भवति। किलित्त। तदेवमादेशान्तरविधानात् प्राकृते ऋकारऌकारौ न भवतः।‡

**एत इद् वेदनादेवरयोः ॥ ३४ ॥**

वेदनादेवरयोरेकारस्य इकारो भवति। विअणा। दिअरो। वाग्रहणानुवृत्तेः क्वचित् वेअणा, देअरो इत्यपि।§

---

* आदर्शपुस्तकानाम् अन्यतमे पुस्तके सूत्रमेतत् "ऋ रीति" इति सूत्रस्य वृत्तिमध्ये सन्निवेशित।

† व्यवस्थितेत्यादि।—विकल्पज्ञापनव्यवस्थया यस्मिन् पक्षे छकारादेशो भवति तत्र रुकारो न स्यात्। वैकल्पिकत्वात् यदा वृक्षशब्दस्य खकारत्वमेव स्वीकृत, तदेव नित्य रुत्वमिति तात्पर्य्यम्।

‡ तदेवमिति।—तत् तस्मात्, एवमित्य, पूर्वोक्तसूत्रविधानक्रमेणेत्यर्थ। पृथक् पृथक् आदेशकरणात् प्राकृतभाषाया कस्यचिदपि शब्दस्य ऋकारो नास्ति ऌकारस्य। तदेवमित्यादिना वृत्तिकारस्तमेवार्थं स्फुटीकरोति।

§ वाग्रहणेत्यादि।—मण्डूकगत्या द्वात्रिंशत्तमे सूत्रे परिगृहीतस्य वाशब्दस्य त्रयस्त्रिंशत्तमं सूत्रमुल्लङ्घ्य समनुवर्त्तनात् कुत्रचित् स्थल वेअणा देअरो इत्यपि स्यात्।

## एत एत् ॥ ३५ ॥

आदेरैकारस्य एकारो भवति । सेलो । सेच्चं । एरावणो । केलासो । तेल्लोक्क ।

( शैलः । शैत्यम् । ऐरावतः । कैलासः । त्रैलोक्यम् । )

## दैत्यादिष्वइ ॥ ३६ ॥ *

दैत्यादिषु शब्देषु ऐकारस्य अइ इत्ययमादेशो भवति । दइच्चो । चइत्तो । भइरव । सइरं । वइरं । वइदेसो । वइदेहो । कइअवो । वइसाहो । वइसिओ । वइसंपाअण ।

( दैत्यः । चैत्रः । भैरवः । स्वैरम् । वैरम् । वैदेशः । वैदेहः । कैतवम् । वैशाखः । वैशिकः । वैशम्पायनः इत्यादयः । )

## दैवे वा ॥ ३७ ॥

दैवशब्दे ऐकारस्य अइ इत्ययमादेशो भवति वा । दइव, देव्व । अनादेशपक्षे नोडादित्वाद् द्वित्वम् । †

## इत् सैन्धवे ॥ ३८ ॥

सैन्धवशब्दे ऐकारस्य इकारो भवति । सिंधव ।

---

* "दैत्यादिष्वइ" इति ।—विशेषशास्त्रेण बलवता "ऐत एत्" इति सामान्यशास्त्रस्य दुर्बलस्य बाधितत्वं ज्ञेयमिति विवेक ।

† अनादेशपक्ष इति ।—आदेशस्य पक्ष आदेशपक्ष, न आदेशपक्ष इति अनादेशपक्षस्तस्मिन् ,यस्मिन् पक्षे "अइ" आदेशो न भवति, तस्मिन् पक्षे इत्यर्थ । नोडादित्वात्—"नीडादिषु" इति तृतीयपरिच्छेदे द्विपञ्चाशत् सूत्रेण अनादिस्थितस्य वकारस्य द्वित्वं भवति, पर वृत्तिकारस्य इम सिद्धान्त लिपिकरप्रमादमूलकम्, अत वय नाद्रियामहे, यतः तृतीयपरिच्छेदीयाष्टपञ्चाशत्सख्यक—"सेवादिषु च" इत्यस्मिन् सूत्रे दैवशब्दस्य वृत्तिकृता परिपठितत्वात् नोडादिसूत्रे चास्य अन्तर्निवेशाभावात् तादृशवृत्तिकृत्सिद्धान्तस्य आपाततो यदसमीचीनत्व तस्य च नीडादित्वादित्यत्र सेवादित्वादित्युक्तेनैव सामञ्जस्यात् न कश्चिद्दोषः ।

**ईद् धैर्य्ये ॥ ३९ ॥**

धैर्य्यशब्दे ऐकारस्य ईकारो भवति। धीरं।

**ओतोऽद्वा प्रकोष्ठे कस्य वः ॥ ४० ॥**

प्रकोष्ठशब्दे ओकारस्य अकारो भवति वा। तत्संयोगेन च ककारस्य वत्वम्। पवट्ठो—पओट्ठो। *

**औत ओत् ॥ ४१ ॥**

औकारस्य आदेरोकारो भवति। कोमुई। जोव्वणं। कोत्थुहो। कोसंबी।

( कौमुदी। यौवनम्। कौस्तुभ'। कौशाम्बी। ) †

**पौरादिष्वउ ॥ ४२ ॥**

पौर इत्येवमादिषु शब्देषु औकारस्य अउ इत्ययमादेशो भवति। पउरो। कउरओ। पउरिसो।

(पौरः। कौरवः। पौरुषम्।) आकृतिगणोऽयम्। कौशले विकल्प'। कोसलो—कउसलो। कौशलम्।

**आच्च गौरवे ॥ ४३ ॥**

गौरवशब्दे औकारस्य आकारो भवति। चकारात् उत्वञ्च। गारवं—गउरवं।

---

* तत्संयोगेनेति।—तस्य अकारस्य संयोगेन सम्बन्धेन च ककारस्य स्थाने वकारो भवति। यदा तु ओकारस्य अकारो न भवति, तदा ककारस्य च वकारो न स्यादिति तात्पर्य्यं ज्ञेयम्।

† जोव्वणमिति।—यौवनशब्दस्य आदौ औकारस्य स्थाने ओकार', पश्चात् नीडादिसूत्रेण वकारस्य अनादिस्थितस्य द्वित्व जातमित्युन्नेयम्। अन्येषामपि उदाहृताना पदाना पृथक पृथक् सूत्रै पृथक् पृथक् कार्य्याणि जातानीति विवेक्तव्यम्।

**उत् सौन्दर्य्यादिषु॥ ४४ ॥**

सौन्दर्य्य इत्येवमादिषु औकारस्य उकारो भवति। सुंदेरं। मुंजाअणो। सुडो। कुक्खेअओ। दुव्वारिओ।

(सौन्दर्य्यम्। मौञ्जायनः। शौण्डः। कौक्षेयकः। दौवारिकः।)

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ अच्‌विधिर्नाम प्रथमः परिच्छेदः।

---

## अथ द्वितीयः परिच्छेदः।

**अयुक्तस्यानादौ॥ १ ॥**

अधिकारोऽयम्। इत उत्तरं यद् वक्ष्यामस्तदयुक्तस्य व्यञ्जनस्यानादौ वर्त्तमानस्य कार्य्यं भवतीत्येवं वेदितव्यम्। वक्ष्यति कादीनां लोपः। मउड। (मुकुटम्।) अयुक्तस्येति

---

* इत इति।—इत उत्तरम्— अस्मात् सूत्रात परमित्यर्थ। [अन्याश्रययोग पञ्चमी, तत पञ्चम्या तस्]। यदिति।—यत कार्य्य वक्ष्याम कथयिष्याम, वयमिति शेष। तदिति।—तत कार्य्यम्, अनादौ वर्त्तमानस्य—अनादिस्थितस्य, मध्यस्थितस्य अन्तस्थितस्येत्यर्थ'। अयुक्तस्य—असयुक्तस्य, व्यञ्जनस्य—व्यञ्जनवर्णस्यैव स्थाने भवति। इत्येवम्—इदमेव, वेदितव्य—बोद्धव्य, पण्डितैरिति शेष। वक्ष्यतीति।—कादीना "कगचजतदपयवा प्रायो लोप" (२।२) इत्यादिना सूत्रेण, कगप्रभृतीना व्यञ्जनवर्णाना बाहुल्येन लोप स्यादिति स्वयमेव सूत्रकार कथयिष्यतीत्यथ। मउडमिति।—"अन्मुकुटादिषु" इति प्रथमपरिच्छेदीय द्वाविंशतिसङ्ख्यकसूत्रेण आदिस्थितस्य उकारस्य अकारादेशो भवति, तत "कगचज—" इत्यादिना वक्ष्यमाणेन सूत्रेण ककारस्य लोपः, ततश्च "टो ड" इति वर्त्तमानपरिच्छेदस्य विंशतिसङ्ख्यकसूत्रेण टस्थाने डः। अयुक्तस्येति —असयुक्तस्य व्यञ्जनवर्णस्यैवाय विधिरिति निर्देशात्

किम् ?—अग्घो। अक्को। ( अर्घः। अर्कः। ) अनादाविति किम् ?—कमलम्। अयुक्तस्येति आ परिच्छेदसमाप्तेः। अनादाविति च आ जकारविधानात्। *

## कगचजतदपयवां प्रायो लोपः॥ २॥

कादीनां नवानां वर्णानामयुक्तानामनादौ वर्त्तमानानां प्रायो बाहुल्येन लोपो भवति। कस्य तावत्।—मउलो। णउलं। गस्य।—साअरो। णअरं। चस्य —वअण। सूई। जस्य।—गओ। रअदं। तस्य।—कअं। विआणं। दस्य।—गआ। मओ। पस्य।—कई। विउल। सुउरिसो। सुपुरुष इति यद्यपि उत्तरपदस्य पुरुषशब्दस्यादिः पकारस्तथापि लोपो भवतीत्यनेन ज्ञापयति वृत्तिकारः, यथा,—उत्तरपदादिरनादिरेवेति। यस्य।—बाउ। णअण। वस्य।—जोअं। दिअहो।

---

अर्घार्कयोरिति संयुक्तयोर्द्वयोर्लोपादि कार्य्य न स्यादिति। अनादाविति किम ?—अनादाविति कथनादादिस्थितस्य ककारस्य किं स्यादेतदर्थमेवो-दाहरण कमलमिति। कमलशब्दस्य ककारस्य आदिस्थिततया असंयुक्त-त्वेऽपि अस्य न ककारलोप इति भाव। अयुक्तस्येति।—आ परिच्छेदसमाप्ते परिच्छेदसमाप्तिपर्य्यन्तमित्यर्थ। अनादाविति चेति।—अनादिस्थितस्य व्यञ्जनस्य यत कार्य्यं भवति तत्तु आ जकारविधानात जकारविधानपर्य्यन्तमित्यर्थ, "आदेर्यो ज" इति वर्त्तमानपरिच्छेदस्य एकत्रिंशतसंख्यकसूत्रात प्रागेव तत्कार्य्य-विधानमिति तात्पर्य्यम्।

† यद्यपीति।—सुपुरुषशब्दस्य आदिपद "सु", शेषपदस्यस्य पुरुषशब्दस्य आदिपद "पु", तर्हि कथमत्र पकारस्य लोप स्यादित्याशङ्का समाधत्ते, यद्यपीति।—यद्यपि उत्तरपदस्थस्य पुरुषशब्दस्य आदिवर्ण पकार, तथाऽपि पस्य लोप स्यादिति वृत्तिकार सूचयति। तदाह यथेत्यादि।—यस्तु उत्तरपदस्य आदिवर्ण, सोऽपि अनादिरेव—अनादित्वेन निर्दिष्ट इत्यर्थ.। अनादित्वे स्वीकृते पकारस्य लोपो निष्प्रत्यूह एवेति विशदार्थः। कस्य तावदिति।—मउलो-णउलमित्यादीनां पदाना सूत्रकार्य्याणि

( मुकुलः। नकुलः। सागरः। नगरम्। वचनम्। सूची। गजः। रजतम्। कनम्। वितानम्। गदा। मदः। कपिः। विपुलम्। सुपुरुषः। वायुः। नयनम्। जीवः। दिवसः। )

प्रायोग्रहणात् यत्र श्रुतिसुखमस्ति तत्र न भवत्येव। † सुकुसुमं। पिअगमण। सचावं। अबजलं। अतुलं। आदरो। अपारो। अजसो। सबहुमाणं।

( सुकुसुमम्। प्रियगमनम्। सचापम्। अपजलम्। अतुलम्। आदरः। अपारः। अयशः। सबहुमानम्। )

अयुक्तस्येत्येव।—सक्को। मग्गो। ( शक्रः। मार्गः। ) अनादावित्येव।—कालो। गंधो। ( कालः। गन्धः। ) ‡

## यमुनायां मस्य ॥ ३ ॥

यमुनाशब्दे मकारस्य लोपो भवति। जउणा।

## स्फटिकनिकषचिकुरेषु कस्य हः ॥ ४ ॥

अनादाविति वर्त्तते। एषु कस्य हकारो भवति। लोपापवादः। फलिहो। णिहसो। चिहुरो। §

---

तु यथायथ विविच्य द्रष्टव्यानीति सचेप। प्राय इति।—सूत्रमध्ये प्राय शब्दस्य निर्देशाद् यस्मिन् स्थले कर्णसुख विद्यते, तस्मिन् स्थले कादीना वर्णाना लोपो न स्यादिति तात्पर्य्यम्, श्रुतिसुखकरतया सूत्रविहितकार्य्यस्य लोपस्याप्यनित्यत्व ज्ञातव्यमिति सूच्यते।

‡ अयुक्तस्येत्येवेति।—"सक्को-मग्गो" इत्येतयो शब्दयोरनादित्वेऽपि संयुक्तवर्णत्वान्न कस्य गस्य च लोप। अनादावित्येवेति।—"कालो-गंधो" इत्यनयोः शब्दयोरसयुक्तवर्णत्वेऽपि कस्य गस्य च आदिस्थितत्वाद् वर्णलोपाभाव इति भाव।

§ अनादावितीति।—अत्रापि आदिस्थितककारत्वे न लोप इति दर्शयति,—अनादाविति वर्त्तते इति। लोपापवाद इति।—"कगचज—" ( २।२ ) इत्यादिना

**शीकरे भः ॥ ५ ॥**

शीकरशब्दे ककारस्य भकारो भवति। सीभरो।

**चन्द्रिकायां मः ॥ ६ ॥**

चन्द्रिकाशब्दे ककारस्य मकारो भवति। चंदिमा।

**ऋत्वादिषु तो दः ॥ ७ ॥**

ऋतु इत्येवमादिषु तकारस्य दकारो भवति। उदू। रअदं। आअदो। णिब्बुदी। आवुदी। संवुदी। सुइदी। आइदी। हदो। संजदो। विउदं। संजादो। संपदि। पड़िवद्दी। *

( ऋतुः। रजतम्। आगतः। निर्वृतिः। आवृतिः। संवृतिः। सुकृतिः। आकृतिः। हतः। संयतः। विवृतम्। संयातः। सम्प्रति। प्रतिपत्तिः। )

**प्रतिसरवेतसपताकासु डः ॥ ८ ॥**

एषु शब्देषु तकारस्य डकारो भवति। लोपापवादः। पडिसरो। वेडिसो। पड़ाआ। †

---

पूर्वसूत्रेण ककारस्य लोपप्रसक्तिं वाधित्वा तत्स्थाने हकारादेश इति लोपापवाद इत्यनेन सूच्यते। फलिहो इत्यत्र सकारस्य लोप, टकारस्य लकार, कस्य च हकार इति बोध्यम्।

* उदू इति।—अत्र "उदृत्वादिषु" इति प्रथमपरिच्छेदस्य ऊनत्रिंशत-सङ्ख्यकसूत्रेण आदिस्थितस्य ऋकारस्य उकार, ततश्च अनेन सूत्रेण तकारस्थाने दकार., तत आनुशासनिकदीर्घत्वम्।

† लोपापवाद इति।—अत्रापि तकारस्य लोपकार्य्यं वाधित्वा तकारस्य स्थाने डकारादेशो जात इति बोद्धव्यम्।

**वसतिभरतयोर्हः ॥ ९ ॥**

वसति-भरतशब्दयोस्तकारस्य हकारो भवति। बसहो। भरहो। *

**गर्भिते णः ॥ १० ॥**

गर्भितशब्दे तकारस्य णकारो भवति। गब्भिणं।

**ऐरावते च ॥ ११ ॥**

ऐरावतशब्दे तकारस्य णकारो भवति। एराबणो। †

**प्रदीप्तकदम्बदोहदेषु दो लः ॥ १२ ॥**

एषु शब्देषु दकारस्य लकारो भवति। पलित्तं। कलंबो। दोहलो।

**गद्गदे रः ॥ १३ ॥**

गद्गदशब्दे दकारस्य रेफादेशो भवति। गग्गरो।

**संख्यायाञ्च ॥ १४ ॥**

सख्यावाचिनि शब्दे यो दकारस्तस्य रेफादेशो भवति। एआरह। बारह। तेरह। (एकादश। द्वादश। त्रयोदश।) अयुक्तस्येत्येव।—नेह चउद्दह। (चतुर्दश।) ‡

---

* "कमलवसदिमत्तणिव्वुदो—" इति शकुन्तलाया दृश्यते। तत्त प्राकृत-भाषानभिज्ञलिपिकरप्रमादवशात् सञ्जातम्। 'बसही" इत्येव समीचीनः पाठ।

† एरावणो इति।—"ऐत एत्" इति प्रथमपरिच्छेदस्य त्रिंशतसंख्यक-सूत्रेण आदिस्थितस्य ऐकारस्य स्थाने एकार, ततोऽनेन च सूत्रेण तस्थाने णकार इति बोध्यम्।

‡ "चतुर्थी चतुर्दश्योस्तुना" इति प्रथमपरिच्छेदस्य नवमसंख्यकसूत्रस्य कार्य्यावसरो नात्र सङ्गच्छते। तत्र तु चतुर्दशीत्यनेन स्त्रीलिङ्गशब्दस्यैव पाक्षिकमीत्व निर्दिष्टमिति तात्पर्य्यमुन्नेयम्।

पो वः ॥ १५ ॥

पकारस्यायुक्तस्य अनादिवर्त्तिनो वकारादेशो भवति। सावो। सवहो। उलवो। उवसग्गो।

( शापः। शपथः। उलपः। उपसर्गः। )

प्रायोग्रहणाद् यत्र लोपो न भवति तत्रायं विधिः। *

आपीड़े मः ॥ १६ ॥

आपीडशब्दे पकारस्य मकारो भवति। आमेलो। †

उत्तरीयानीययोर्ज्जो वा ॥ १७ ॥

उत्तरीयशब्दे अनीयप्रत्ययान्ते च यस्य ज्जो भवति वा। उत्तरीअ—उत्तरिज्जं। रमणीअं—रमणिज्जं। भरणीअं—भरणिज्जं। ‡

छायायां हः ॥ १८ ॥

छायाशब्दे यकारस्य हकारो भवति। छाहा।

कबन्धे बो मः ॥ १९ ॥

कबन्धशब्दे बकारस्य मकारो भवति। कमंधो।

टो डः ॥ २० ॥

टस्यानादिवर्त्तिनो डकारो भवति। णडो। विडवो।

---

* प्राय इति।—"कगचज—" इति वर्त्तमानपरिच्छेदस्य द्वितीयसंख्यकसूत्रेण पस्य लोपविधानमुक्तम्, तत्र बाहुल्यनिर्देशात् सर्वत्र लोपकार्य्यं न स्यात। यत्र तु लोपाभावस्तत्रैव पस्थाने वकार इति तात्पर्य्यम्, अन्यथा पकारस्याभावात सूत्रकरणवैयर्थ्यापत्तेरिति भावः।

† "एन्नीडापीड—" इति प्रथमपरिच्छेदस्य एकोनविंशसंख्यकसूत्रेण ईस्थाने एकारः, ततोऽनेन च सूत्रेण पस्थाने मकार इति भाव।

‡ "रमणीआ कखु कालो" इत्यत्र "रमणीय खलु काल" इत्यनुवादः। पक्षे "रमणिज्जो कखु कालो" इत्यपि स्यात्।

**सटाशकटकैटभेषु ढः ॥ २१ ॥**

एतेषु टकारस्य ढकारो भवति। सढा। सअढो। केढवो।

**स्फटिके लः ॥ २२ ॥**

स्फटिकशब्दे टकारस्य लकारो भवति। फलिहो। *

**डस्य च ॥ २३ ॥**

डकारस्यायुक्तस्यानादिभूतस्य लकारो भवति। दालिमं। तलाअं। बलहो। प्राय इत्येव।—दाडिमं। बडिसं। णिबिडो। †

**ठो ढः ॥ २४ ॥**

ठकारस्यायुक्तस्यानादिभूतस्य ढकारो भवति। मढ। जढर। कढोरं। ( मठम्। जठरम। कठोरम्। )

**अङ्कोठे ल्लः ॥ २५ ॥ ‡**

अङ्कोठशब्दे ठकारस्य ल्लकारो भवति। अंकोल्लो।

**फो भः ॥ २६ ॥**

फकारस्यायुक्तस्यानादिभूतस्य भकारो भवति। सिभा। सेभालिआ। सभरो। सभलं।

( शिफा। शेफालिका। शफरो। शफरम्। )

---

* फलिहो इति।—"स्फटिकनिकष—" इति द्वितीयपरिच्छेदस्य चतुर्थसंख्यकसूत्रेण ककारस्य हकारः, ततः अनेन सूत्रेण टस्थाने लकार इति ज्ञेयम्।

† प्राय इति।—"कगचज—" (२।२) इत्यादिकात् सूत्रात् प्राय इत्येवमनुवर्त्तते इति शेषः। तस्माद् बाहुल्येन लकारविधानकार्य्यं न स्यात्, प्रायिकत्वाद् दाडिममित्यादिषु लकारस्याप्रसक्तिरिति भावः।

‡ "अङ्कोठे ल्लः" इत्यत्र "अङ्कोले ल्लः" इति क्वचित् पाठः।

**खघथधभां हः ॥ २७ ॥**

खादीनां पञ्चानामयुक्तानामनादिवर्त्तिनां हकारो भवति। खस्य तावत् ।—मुह । मेहला । घस्य ।—मेहो । जहणो । थस्य ।—गाहा । सबहो । धस्य ।—राहा । बहिरो । भस्य ।— सहा । रासहो । प्राय इत्येव ।—पखलो । पलंघणो । अधीरो । अधणो । उवलद्धभावो ।

( मुखम् । मेखला । मेघः । जघनः । गाथा । शपथः । राधा । बधिरः । सभा । रासभः । प्रखलः । प्रलङ्घनः । अधीरः । अधनः । उपलब्धभावः । ) *

**प्रथमशिथिलनिषधेषु ढः ॥ २८ ॥**

एतेषु थधयोर्ढकारो भवति । पढमो । सिढिलो । णिसढो ।

**कैटभे बः ॥ २९ ॥**

कैटभशब्दे भकारस्य बकारो भवति । केढबो । †

**हरिद्रादीनां रो लः ॥ ३० ॥**

हरिद्रा इत्येवमादीनां रेफस्य लकारो भवति । हलद्दा ।

---

* अत्रापि सूत्रे प्रायोग्रहणस्यानुवर्त्तनम् , तस्मात् "पखलो" इत्यादीना हकारादेशस्याभाव इति तात्पर्य्यम् । सबहो इति ।—"शषोः सः" ( २।४३ ) इति सूत्रेण आदौ शपथशब्दस्य शस्थाने स, तत "पो व" ( २।१५ ) इत्यनेन पस्थाने बकारः, पश्चादनेन सूत्रेण थस्थाने ह । एवमन्येषामप्युदाहृतानां शब्दाना सूत्रविशेषै कार्य्यविशेषा उन्नेया ।

† केढबो इति ।—आदौ "ऐत एत" ( १।३५ ) इत्यनेन आदिस्थितस्य ऐकारस्य एकारो भवति, तत "सटाशकटकैटभेषु ढः" ( २।२१ ) इत्यनेन टस्थाने ढकार, पश्चादनेन सूत्रेण भस्थाने ब इति बोध्यम् ।

चलणो। मुहलो। जहिट्ठिलो। सोमालो। कलुणं। अंगुली। इगालो। चिलादो। फलिहा। फलिहो।

( हरिद्रा। चरणः। मुखरः। युधिष्ठिरः। सुकुमारः। करुणम्। अङ्गुरो। अङ्गारः। किरातः। परिखा। परिघः। ) इत्येवमादयः। *

## आदेर्यो जः ॥ ३१ ॥

अनादेरिति निवृत्तम्। आदिभूतस्य यकारस्य जकारो भवति। जट्ठो। जसो। जक्खो। ( यष्टिः। यशः। यक्षः। ) †

## यष्ट्यां लः ॥ ३२ ॥

यष्टिशब्दे यकारस्य लकारो भवति। लट्ठो।

## किराते चः ॥ ३३ ॥

किरातशब्दे आदेर्वर्णस्य चकारो भवति। चिलादो। ‡

## कुब्जे खः ॥ ३४ ॥

कुब्जशब्दे आदेर्वर्णस्य खकारो भवति। खुज्जो। §

---

* इत्येवमादय इत्यभिधानात् अनुक्तानामपि शब्दाना रकारस्य लत्वोदाहरणानि यथायथ नाटकादिषु द्रष्टव्यानीति तात्पर्य्यम्।

† जक्खो इति।—आदौ अनेन सूत्रेण यकारस्य जकार, पश्चात् "क्षस्क्षा ख" ( ३।२९ ) इत्यनेन क्षस्य खकार, तेन जक्खो इति पद सिद्धमिति ज्ञेयम्।

‡ चिलादो इति।—आदौ अनेन सूत्रेण आदिवर्णस्य ककारस्य चकार, तत "हरिद्रादीना रा ल" ( २।३० ) इत्यनेन रस्य लत्व, पश्चात् "ऋत्वादिषु तो द" ( २।७ ) इत्यनेन सूत्रेण तकारस्य दकार।

§ खुज्जो इति।—आदौ अनेन सूत्रेण आदिस्थितस्य वर्णस्य ककारस्य खकार, पश्चात् "वर्गेषु युज पूर्वः" ( ३।५१ ) इत्यनेन अयुग्मस्य तृतीयवर्णस्य ( प्रकृतत्वादत्र जकारस्यैव ) द्वित्वमिति।

**दोलादण्डदशनेषु डः ॥ ३५ ॥**

एषु आदेर्वर्णस्य डकारो भवति। डोला। डंडो। डसणो ।*

**परुषपरिघपरिखासु फः ॥ ३६ ॥**

एतेषु आदेर्वर्णस्य फकारो भवति। फरुसो। फलिहो। फलिहा। †

**पनसेऽपि ॥ ३७ ॥**

पनसशब्देऽपि पकारस्य फकारो भवति। फणसो।

**बिसिन्यां भः ॥ ३८ ॥**

बिसिनीशब्दे आदेर्वर्णस्य भकारो भवति। भिसिणी। स्त्रीलिङ्गनिर्देशादिह न भवति,—बिसं। ‡

**मन्मथे वः ॥ ३९ ॥**

मन्मथशब्दे आदेर्वर्णस्य वकारो भवति। वम्महो। §

---

* डसणो इति।—आदौ] अनेन सूत्रेण दस्य डत्व, तत "शषो स" (२।४३) इत्यनेन शस्य सत्वं, पश्चात् "नो ण सर्वत्र" (२।४२) इत्यनेन नकारस्य णत्वमिति बोध्यम्।

† आदर्शपुस्तकानाम् अन्यतमे पुस्तके "परुषपरिघ—" इत्यत्र "परुषपलित—" इति पाठान्तरं दृश्यते। फलिहो इति।—आदावनेन सूत्रेण फकार, तत हरिद्रादीनां रो ल (२।३०) इत्यनेन रस्य लत्व, पश्चात "खघथधभां हः" (२।२७) इत्यनेन खस्य हकारः। एवं फलिहापि।

‡ स्त्रीलिङ्गेत्यादि।—सूत्रे बिसिनीति स्त्रीलिङ्गग्रहणात बिसमित्यस्य क्लीवलिङ्गस्य बस्य भत्वाभाव इति।

§ वम्महो इति।—प्रागनेन सूत्रेण आदिस्थितस्य मकारस्य वकार, तत "न्मो म" (३।४३) इत्यनेन "न्म" इत्यस्य "म" इत्ययमादेश, ततो मस्य द्वित्व, पश्चात् "खघथ—" (२।२७) इत्यादिना थकारस्य हकारादेश इति सर्वं सुस्थम्।

**लाहले णः ॥ ४० ॥** *

लाहलशब्दे आदेर्वर्णस्य णकारो भवति । णाहलो ।

**षट्शावकसप्तपर्णानां छः ॥ ४१ ॥**

एतेषामादेर्वर्णस्य छकारो भवति । छट्ठो । छम्मुहो । छावओ । छत्तवसो । † (षष्ठो । षण्मुखः । शावकः । सप्तपर्णः ।)

**नो णः सर्वत्र ॥ ४२ ॥**

आदेरिति निवृत्तम् । सर्वत्र नकारस्य णकारो भवति । णई । कणअं । वअणं । माणुसो । ‡

( नदी । कनकम् । वचनम् । मानुषः । )

**शषोः सः ॥ ४३ ॥**

सर्वत्र शकार-षकारयोः सकारो भवन्ति । शस्य ।—सद्दो । णिसा । अंकुसो । षस्य ।—सढो । वसहो । कसाअं । §

( शब्दः । निशा । अङ्कुशः । षण्ढः । वृषभः । कषायम् । )

---

* "लाहले ण" इत्यत्र "लाहन ण" इति क्वचित् पाठ ।

† छत्तवसो इति ।—सप्तपर्णशब्दस्य पूर्वमनेन सूत्रेण आदिवर्णस्य सकारस्य छकार, तत "उपरिलोप कगडतदपषसाम्" ( ३।१ ) इत्यनेन उपरिवर्त्तिनो युक्तवर्णस्य पकारस्य लोप, ततो द्वित्व, तत 'पो व" ( २।१५ ) इत्यनेन अनादिस्थितस्य पस्य वकार, पश्चात "सर्वत्र लवराम्" ( ३।३) इत्यनेन ऊर्द्धस्थितस्य रफस्य लोपो द्वित्वञ्चेति बहुसूत्रसमावेशोऽत्र सन्धेय इति ।

‡ "माणुसो" इत्यत्र "माणसिणी" इति क्वचित् पाठ, तत्र "मनस्विनी" इति संस्कृतम् ।

§ "अंकुसो" इत्यत्र "अंसो" इति पाठे—"अंश" इति संस्कृतम् । पुन "सढो" इत्यत्र "सठो" इति पाठे,—"षण्ड" इति संस्कृतम् । वसहो इति ।—प्राक् "ऋतोऽत्" ( १।२७ ) इत्यनेनादिस्थितस्य ऋकारस्य अकारः, ततः षस्य सत्व, पश्चाद् भस्य हकार इति विवेकः ।

**दशादिषु हः ॥ ४४ ॥**

दश इत्येवमादिषु शकारस्य हकारो भवति। दह। एआरह। बारह। तेरह। ( दश। एकादश। द्वादश। त्रयोदश। )

**संज्ञायां वा ॥ ४५ ॥**

संज्ञायां गम्यमानायां दशशब्दे शस्य हत्वं वा भवति। दहमुहो—दसमुहो। दहबलो—दसबलो। दहरहो—दसरहो।

( दशमुखः। दशबलः। दशरथः। ) *

**दिवसे सस्य ॥ ४६ ॥**

दिवसशब्दे सकारस्य हकारो भवति। दिअहो।

**स्नुषायां ण्हः ॥ ४७ ॥**

स्नुषाशब्दे षकारस्य ण्हकारो भवति। सोण्हा। †

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ अयुक्तवर्णविधिर्नाम द्वितीयः परिच्छेदः।

---

* दशमुख इत्यादि।—दशमुखो रावणः, दशबलो बुद्धविशेषः, "षडभिज्ञो दशबलः" इत्यमरः। दशरथो रामचन्द्रपिता। एतेषां संज्ञात्वात् शकारस्य हकारत्वं वैभाषिकमिति।

† सोण्हेति।—आदौ संयुक्तवर्णस्य लोपः, ततः "उत ओत्तुण्डरूपेषु" (१।२०) इत्यनेन रूपग्रहणसामर्थ्यात् उकारस्य ओकारः, पश्चादनेन सूत्रेण "ण्ह" इत्ययमादेशो जात इति विवेक्तव्यम्।

# अथ तृतीयः परिच्छेदः।

## उपरिलोपः कगडतदपषसाम्॥ १॥

कादीनामष्टानां युक्तस्योपरिस्थितानां लोपो भवति। कस्य तावत्।—भत्त। सित्थओ। गस्य।—मुद्धो। सिणिद्धो। डस्य।—खग्गो। सज्जो। तस्य।—उप्पलं। उप्पाओ। दस्य।—मुग्गो। मुग्गरो। पस्य।—सुत्तो। पज्जत्तो। षस्य।—गोट्ठी। णिट्ठुरो। सस्य।—खलिअं। णेहो।*

(भक्तम्। सिक्थकः। मुग्धः। स्निग्धः। खड्गः। षड्जः। उत्पलम्। उत्पातः। मुद्गः। मुद्गरः। सुप्तः। पर्य्याप्तः। गोष्ठी। निष्ठुरः। स्खलितम्। स्नेहः।)

## अधो मनयाम्॥ २॥

मकार-नकार-यकाराणां युक्तस्याधःस्थितानां लोपो भवति। मस्य।—सोस्सं। रस्सी। जुग्गं। बाग्गो। नस्य।—णग्गो। यस्य।—सोम्मो। जोग्गो।†

---

* कादीनामिति।—युक्तस्य संयुक्तवर्णस्य, उपरिस्थितानाम् उपरिवर्त्तिनां, कादीनां कगेत्यारभ्य सकारान्तानाम्, अष्टानाम् अष्टसंख्यकानां वर्णानां, लोपो भवति। यदा ककार-गकारादयः अन्यैर्व्यञ्जनवर्णैः संयुक्ता भवन्ति, तदा ककारादीनामूर्द्धस्थितत्वात् तेषामेव लोप इति तात्पर्य्यम्। भक्तमित्यत्र ककार-तकारयोः संयोगात् ककारस्य तकारोपरि विद्यमानतया ऊर्द्धस्थितस्य ककारस्यैव लोप इति, एवमन्येष्वपि उदाहरणेषु।

† मकारेत्यादि।—यदा मकार-नकार-यकारा अपरवर्णैः संयुज्यन्ते, तदा म-न-य-संयुक्तानां वर्णानां मध्ये मकारादीनामधःस्थितत्वात् तेषामेव लोपः। पूर्वसूत्रे कादीनामुपरिवर्त्तिनाम्, अत्र तु सूत्रे मकारादीनामधोवर्त्तिनां वर्णानामेव लोप इति

( सोक्ष्मम्। रश्मिः। युग्मम्। वाग्मी। नग्नः। सौम्यः। योग्यः। )

**सर्वत्र लवराम् ॥ ३ ॥**

लकार-वकार-रेफाणां युक्तस्य उपर्य्यधःस्थितानां लोपो भवति। लस्य।—उक्का। बक्कलं। बिक्कवो। वस्य।—लोद्धओ। पिक्कं। रस्य।—अक्को। सक्को। *

( उल्का। वल्कलम्। विक्लवः। लुब्धकः। पक्कम्। अर्कः। शक्रः। )

**द्रे रो वा ॥ ४ ॥**

द्रशब्दे रेफस्य वा लोपो भवति। दोहो,—द्रोहो। चन्दो,—चन्द्रो। रुद्दो,—रुद्रो।

**सर्वज्ञतुल्येषु ञः ॥ ५ ॥**

सर्वज्ञतुल्येषु ञकारस्य लोपो भवति। सव्वज्जो। इंगिअज्जो। जानातेर्यान्येवरूपाणि तत्र ञलोपः। †

---

परस्पर भेद इत्यवगन्तव्यम्। सोक्ष्ममित्यादौ च स्थले मकारस्य अधःस्थितत्वादादौ तस्य लोपः, पश्चात् सकारस्य द्विरुक्तिः। एवमन्येषामपि उदाहरणानि यथायथ ज्ञेयानीति। सूत्रेऽस्मिन् पूर्वसूत्रोल्लिखित लोप इत्यनुवर्त्तत इति समाधेयम्।

* लकारेत्यादि।—सूत्रेऽस्मिन् सर्व्वत्रेति निर्देशात् लकार-वकार-रकारसंयुक्तानां व्यञ्जनवर्णानां मध्ये क्वचिदुपरिवर्त्तिनः क्वचिदधोवर्त्तिनश्च वर्णस्य लोपो भवतीति तात्पर्य्यम्। उल्कावल्कलयोरूर्द्ध्वस्थितस्य, विक्लवशब्दे अधःस्थितस्य, लुब्धके ऊर्द्ध्वस्थस्य, पक्के अधःस्थस्य, अर्के ऊर्द्ध्वस्थितस्य, शक्रे च अधःस्थस्य वर्णस्य लोप इति द्रष्टव्यम्।

† सूत्रमध्ये तुल्येति निर्देशात् तदर्थं वृत्तिकारः स्वयमेव विवृणोति, जानातेरित्यादि।—जानातेर्ज्ञाधातोर्यानि एवरूपाणि सर्वज्ञतुल्यानि पदानीति यावत्। तत्र तेषु, ञकारस्य लोपो भवतीति तात्पर्य्यम्।

**श्मश्रु-श्मशानयोरादेः ॥ ६ ॥**

श्मश्रु-श्मशानयोरादेर्वर्णस्य लोपो भवति। मस्सू। मसाण।

**मध्याह्ने हस्य ॥ ७ ॥**

मध्याह्नशब्दे हकारस्य लोपो भवति। मज्झण्णो।

**ह्न-ह्ल-ह्मेषु ण-ल मां स्थितिरूर्द्ध्वम् ॥ ८ ॥**

ह्न-ह्ल-ह्म इत्येतेषु अधःस्थितानां णकार-लकार-मकाराणां स्थितिरूर्द्ध्वमुपरिष्टाद् भवति। ह्नस्य।—पुव्वण्हो। अवरण्हो। ह्लस्य।—कल्हार। अल्हादो। ह्मस्य।—बम्हणो। *

( पूर्व्वाह्न:। अपराह्न.। कह्लारम्। आह्लादः। ब्राह्मणः। )

**युक्तस्य ॥ ९ ॥**

अधिकारोऽयम्। आ परिच्छेदसमाप्तेर्यदित ऊर्द्धमनुक्रमिष्यामो युक्तस्येत्येवं वेदितव्यम्। वक्ष्यति,—"अस्थिनि" अट्ठी। युक्तग्रहणं हलोऽन्यस्य माभूत्। †

---

* ह्नेत्यादि।—अधोवर्त्तिना नकारादीनां त्रयाणा वर्णानामूर्द्धावस्थान स्यादिति। तेन 'ह्न' इत्यत्र 'ण्ह,' 'ह्ल' इत्यत्र 'ल्ह,' 'ह्म' इत्यत्र च 'म्ह' इत्येव वर्णत्रयस्य ऊर्द्धगतिर्द्रष्टव्या।

† अधिकारोऽयमिति।—परिच्छेदसमाप्तिपर्य्यन्तम् इत,—अस्मात् सूत्रात्, ऊर्द्ध पर, यत् यादृश कार्य्यम्, अनुक्रमिष्याम यथाक्रम कथयिष्याम, (तदित्यध्याहार्य्यमत्र) तत् कार्य्यं, युक्तस्य संयुक्तवर्णस्यैव भविष्यति, इत्येवम् ईदृशं, वेदितव्यं ज्ञातव्यम्। अयमेवाधिकार. युक्तवर्णस्यैवाधिकार इति भाव। तमेवार्थं स्फुटीकरोति वक्ष्यतीति।—"अस्थिनि" (३।११) इत्यत्र सूत्रे अट्ठीति स्यादिति स्वयमेव सूत्रकारो वक्ष्यतीति तात्पर्य्यम्। युक्तेति।—युक्तेति निर्देशात् अन्यस्य अन्तस्थितस्य, हलो व्यञ्जनवर्णस्य स्थाने, न भवत्विति ज्ञेयम्, अन्तस्थितस्य व्यञ्जनवर्णस्य लोप इति स्वयमेव वक्ष्यतीति भावः।

**ष्टस्य ठः ॥ १० ॥**

"ष्ट" इत्येतस्य युक्तस्य ठकारो भवति। लट्ठी। दिट्ठो।

**अस्थिनि ॥ ११ ॥**

अस्थिशब्दे युक्तस्य ठकारो भवति। अट्ठी।

**स्तस्य थः ॥ १२ ॥**

स्तशब्दस्य थकारो भवति। उपरि लोपापवादः। हत्थो। समत्थो। थुई। थवओ। कोत्थुहो। †

( हस्तः। समस्तः। स्तुतिः। स्तवकः। कौस्तुभः। )

**न स्तम्बे ॥ १३ ॥**

स्तम्बशब्दे स्तकारस्य थकारो न भवति। तंबो।

**स्तम्भे खः ॥ १४ ॥**

स्तम्भशब्दे स्तकारस्य खकारो भवति। खंभो। ‡

---

लट्ठीति।—"यष्ट्या लः" ( २।३२ ) इत्यनेन यष्टिशब्दस्य यस्थाने ल, तत ष्टस्थाने ठ, पश्चात् टवर्गस्य प्रथमवर्णस्य द्वित्वमिति बोध्यम्। दिट्ठीत्यत्र "इदृष्यादिषु" ( १।२८ ) इत्यनेनादिस्थितस्य ऋकारस्य इकार, ततः ष्टस्थाने ठ, पश्चात् टवर्गीयप्रथमवर्णस्य द्वित्वम्।

† उपरीति।—"उपरिलोपः कगडतदपषसाम्" (३।१) इत्यनेन सूत्रेण "स्त" इत्यस्य उपरिवर्त्तिन सकारस्य लोपप्रसक्तिरासीत, तत्कार्य्यं वाधित्वा अनेन सूत्रेण स्तस्थाने थकार, पश्चात् तवर्गीयप्रथमवर्णस्य द्वित्वमिति। कोत्थुहो इति।—प्राक् "औत ओत्" ( १।४१ ) इत्यनेन औकारस्य ओकार, ततः अनेन सूत्रेण स्तस्य थ, तवर्गीयप्रथमवर्णस्य द्विरुक्ति, पश्चात् "खघथधभां हः" ( २।२७ ) इत्यनेन भस्थाने हकार इति बोध्यम्।

‡ खभो इति।—अत्र सयुक्तवर्णत्वात "खघथ—" ( २।२७ ) इति सूत्रस्य नावसर इति तात्पर्य्यम्।

**स्थाणावहरे ॥ १५ ॥**

स्थाणुशब्दे युक्तस्य खकारो भवति । अहरे ।—हराभिधेये न भवति । खाणू । अहर इति किम् ?—थाणू हरो ।*

**स्फोटके ॥ १६ ॥** खः

स्फोटकशब्दे युक्तस्य खकारो भवति । खोडओ । †

**र्यशय्याभिमन्युषु जः ॥ १७ ॥**

"र्य" इत्यस्य शय्याभिमन्युशब्दयोश्च युक्तस्य जकारो भवति । कज्ज । सेज्जा । अहिमज्जू । ‡

( कार्य्यम् । शय्या । अभिमन्युः । )

**तूर्य्यधैर्य्यसौन्दर्य्याऽऽश्चर्य्यपर्य्यन्तेषु रः ॥ १८ ॥**

एतेषु शब्देषु र्यस्य रेफो भवति । तूरं । धीर । सुंदेरं । अच्छेरं । पेरंतं । §

---

* अहर इति ।—हराभिधेये हर शिव अभिधेयो यस्य स तथोक्त, तादृशे अर्थे गम्यमाने स्थस्य न खकार । हरपक्षे "उपरिलोप" ( ३।१ ) इत्यनेन सकारस्य लोप इति ।

† खोडओ इति ।—आदावनेन सयुक्तवर्णस्य स्फकारस्य खकार, तत "उपरिलोप" ( ३।१ ) इत्यादिना उपरिवर्त्तिन सकारस्य लोप, पश्चात "टो ड" ( २।२० ) इत्यनेन टस्य डत्वमिति ।

‡ कज्जमिति ।—आदौ "अदात:" (१।१०) इति सूत्रेण आकारस्थाने अकारः, तत अनेन सूत्रेण र्यस्य जत्व, पश्चाज्जकारस्य द्वित्वमिति बोध्यम् । सेज्जेति ।—आदौ "ए शय्यादिषु" ( १।५ ) इत्यनेन आदिस्थितस्य अकारस्य एकार, तत: युक्तस्य य्यकारस्य जकार, तस्य च द्वित्वमिति । अहिमज्जू इति ।—आदौ "खघथधभा ह" ( २।२७ ) इत्यनेन भस्य हकार, तत अनेन युक्तस्य न्यकारस्य जकार', पश्चाद् द्वित्वमिति ।

§ धीरमिति ।—प्राक् "ईद्वैर्य्ये" (१।३९) इत्यनेन ऐकारस्य ईकार., पश्चादनेन

## सूर्ये वा ॥ १९ ॥

सूर्य्यशब्दे र्यकारस्य रेफादेशो भवति वा । सूरो—सूज्जो ।

## चौर्य्यसमेषु रिअं ॥ २० ॥

चार्य्यसमेषु शब्देषु र्यस्य "रिअं"—इत्यादेशो भवति । चोरिअं । सोरिअं । वोरिअं ।

( चौर्य्यम् । शौर्य्यम् । वोर्य्यम् । ) समग्रहणादाकृतिगणोऽयम् । *

## पर्य्यस्त-पर्य्याण-सौकुमार्य्येषु लः ॥ २१ ॥

एषु शब्देषु र्यस्य लकारो भवति । पल्लत्थं । पल्लाण । सोअमल्ल । †

---

सूत्रेण र्यकारस्य रेफत्वमिति । सुदेरमिति ।—पूर्वं "उत सौन्दर्य्यादिषु" (१।४४) इति सूत्रेण औकारस्य उकार, तत "ए शय्यादिषु" (१।५) इत्यनेन आदेरकारस्य एकार, पश्चादनेन सूत्रेण र्यस्य रेफादेश इति । अच्छेरमिति ।—पूर्वं "अदात" (१।१०) इत्यनेन आकारस्य अकार तत "श्च-त्स-प्सा छ" (३।४०) इत्यादिना श्चस्थाने छकार, द्वित्वञ्च, पुन. "ए शय्यादिषु" (१।५) इत्यनेन अकारस्थाने एकार, पश्चादनेन र्यस्य रकार इति । पेरतमिति ।—प्राक् "ए शय्यादिषु" (१।५) इत्यनेन आदिस्थितस्य अकारस्य एत्व, पश्चात र्यस्थाने रकार इति ।

चौर्य्यसमेष्विति ।—चौर्य्यसमेषु चौर्य्यतुल्येषु शब्देष्वित्यर्थ । समग्रहणादिति ।—सूत्रे समशब्दस्य निर्देशादयमाकृतिगण, एतदाकारा शब्दा स्ट्टोरन्नित्यर्थ । चोरिअमित्यत्र 'औत ओत्' (१।४१) इत्यनेन औकारस्य ओकार । सोरिअमित्यत्रापि स एव नियम ।

† पल्लत्थमिति ।—अत्र प्राक् र्यस्य लकार:, तस्य द्वित्वं, पश्चात् 'स्तस्य थ' (३।१२) इत्यनेन स्तस्य थकार,, तवर्गीयप्रथमवर्णस्य द्विरुक्तिश्चेति ।

**र्तस्य टः ॥ २२ ॥**

र्त इत्येतस्य टकारो भवति। केवट्टओ। णट्टओ। णट्टई।*
( कैवर्त्तः। नर्त्तकः। नर्त्तकी। )

**पत्तने ॥ २३ ॥**

पत्तनशब्दे युक्तस्य टकारो भवति। पट्टण।

**न धूर्त्तादिषु ॥ २४ ॥**

धूर्त इत्येवमादिषु र्त इत्येतस्य टकारो न भवति। धुत्तो। कित्ती। वत्तमाणं। वत्ता। आवत्तो। संवत्तओ। णिवत्तओ। वत्तिआ। अत्तो। कत्तरी। मुत्ती।†
( धूर्त्त। कीर्त्तिः। वर्त्तमानम्। वार्त्ता। आवर्त्तः। सवर्त्तकः। निवर्त्तकः। वर्त्तिका। आर्त्तः। कर्त्तरी। मूर्त्तिः। )

**गर्ते डः ॥ २५ ॥**

गर्तशब्दे तस्य डकारो भवति। गड्डो।

**गर्दभ-संमर्द-वितर्दि-विच्छर्दिषु र्दस्य ॥२६॥**

एतेषु र्दस्य डो भवति। गड्डहो। समड्डो। विअड्डो। विछड्डो।‡

**त्य-थ्य-द्यां च-छ-जाः ॥ २७ ॥**

'त्य'-'थ्य'-'द्य' इत्येतेषां 'च'-'छ'-'ज' इत्येते यथासंख्य

* केवट्टओ इति।—'ऐत एत्' (१।३५) इत्यनेन ऐकारस्य एकारः, तत अनेन र्तस्य टकारः, द्वित्वञ्च।

† धुत्तो कित्ती-वत्ता-मुत्ती इत्यत्र सर्वत्र दीर्घस्वरस्य ह्रस्वत्व यथायथमुन्नेयम्।

‡ गड्डहो इति।—अवादौ र्दस्य डकार, द्वित्वञ्च, पश्चाद् भकारस्य हकार इति।

भवन्ति। त्यस्य।—णिच्चं। पच्चक्खं। थ्यस्य।—रच्छा। मिच्छा। पच्छं। द्यस्य।—विज्जा। वेज्जं। *

( नित्यम्। प्रत्यक्षम्। रथ्या। मिथ्या। पथ्यम्। विद्या। वैद्यम्। )

### ध्यह्योर्झः ॥ २८ ॥

'ध्य'-'ह्य' इत्येतयोर्झकारो भवति। ध्यस्य।—मज्झं। अज्झाओ। ह्यस्य।—वज्झओ। गुज्झओ। †

( मध्यम्। अध्यायः। वाह्यकः। गुह्यकः। )

### ष्क-स्क-क्षां खः ॥ २९ ॥

'ष्क'-'स्क'-क्षां खकारो भवति। ष्कस्य।—मुक्खं। पोक्खरो। स्कस्य।—खदो। खंधो। क्षस्य।—खुदो। जक्खो।

( मुष्कम्। पुष्करः। स्कन्दः। स्कन्धः। क्षुद्रः। यक्षः। )

### अक्ष्यादिषु छः ॥ ३० ॥

अक्षि इत्येवमादिषु क्षकारस्य छकारो भवति। अच्छी।

---

* पच्चक्खमिति।—इहाप्यादौ "सर्वत्र—" (३।३) इति सूत्रेण अधोवर्णस्य रकारस्य लोप, ततोऽनेन सूत्रेण त्यस्य चकार, तस्य द्वित्वञ्च, पश्चात् "अक्ष्यादिषु" (३।३०) इत्यनेन क्षस्थाने छकार, ततश्च वर्गीयप्रथमवर्णस्य चकारस्य द्वित्वञ्चेति भाव। वेज्जमित्यत्र आदौ "ऐत एत" (१।३५) इत्यनेन ऐकारस्थाने एकार, तत द्यस्थाने जस्तस्य द्वित्वञ्च।

† वज्झओ इति।—अत्र प्राक "अदातो यथादिषु वा" (१।१०) इत्यनेन सूत्रेण आकारस्थाने अकार, ततोऽनेन ह्यकारस्य झकार, चवर्गीयतृतीयवर्णस्य द्वित्व, पश्चात् "कगचज—" (२।२) इत्यादिना सूत्रेण ककारस्य लोप, तत "अत ओत सौ" (५।१) इत्यादिना सूत्रेण सुस्थाने ओकार इत्येव सिद्धमिति द्रष्टव्यम्।

‡ अच्छीत्यादि।—अस्मिन् सूत्रे उदाहृता शब्दा यैर्यैः सूत्रैः सिद्धा तानि

लच्छी। छुत्तो। छोरं। छूढो। उच्छित्तो। सरिच्छं। उच्छू। उच्छा। छारं। रिच्छो। मच्छिआ। छुअं। छुरं। छेत्तं। वच्छो। दच्छो। कुच्छी।

(अक्षि। लक्ष्मी। क्षुतः। क्षीरम्। क्षुब्धः। उत्क्षिप्तः। सदृक्षम्। इक्षुः। उक्षन्। क्षारम्। ऋक्षः। मक्षिका। क्षुतम्। क्षुरम्। क्षेत्रम्। वक्षस्। दक्षः। कुक्षिः।) इत्येवमादयः। ‡

### क्षमा-वृक्ष-क्षणेषु वा ॥ ३१ ॥

एतेषु क्षकारस्य छकारो भवति वा। छमा—खमा। वच्छो—रुक्खो। छणं—खणं। वृक्षशब्दे ऋकारस्याकारे कृते, क्षणशब्दे चोत्सवाभिधायिनि छत्वमिष्यते। *

### ष्म-पक्ष्म-विस्मयेषु म्हः ॥ ३२ ॥

'ष्म' इत्येतस्य पक्ष्म-विस्मयशब्दयोश्च युक्तस्य म्हकारो भवति। ष्मस्य।—गिम्हो। उम्हा। पम्हो। विम्हओ। †

(ग्रीष्मः। ऊष्मन्। पक्ष्मन्। विस्मयः।)

---

तु यथायथं द्रष्टव्यानि। उच्छू इति।—"उदिक्षु वृश्चिकयोः" (१।१५) इत्यनेन इकारस्य उत्वं, पश्चादनेन सूत्रेण छत्वं, द्वित्वञ्च। इत्येवमादय इति।—इत्येवम् आदिर्येषां ते तथोक्ता अन्येऽपि शब्दा ग्राह्या इति भावः।

* वृक्षशब्द इति।—"वृक्षे वेन रुर्वा" (१।३२) इत्यनेन वशब्देन सह ऋकारस्य वैकल्पिको रुकारः। "ऋतोऽत्" (१।२७) इत्यनेन सूत्रेण यदा ऋस्थाने अकारः, तदैव छत्वावसर इति। क्षणशब्दस्य कालवाचकत्वमुत्सववाचकत्वञ्च दृश्यते, यदा त्वस्य उत्सवार्थो भवति, तदैव क्षकारस्य छकारः, कालपरत्वे तु "ष्क-स्क-क्षां खः" (३।२९) इत्यनेन क्षकारस्य खकार इतीयांस्तु विशेषो द्रष्टव्यः।

† गिम्हो इति।—"इदीतः पानीयादिषु" (१।१८) इत्यनेन आदिस्थितस्य ईकारस्य इकारः, ततः "सर्वत्र लवराम्" (३।३) इत्यनेन अधःस्थितस्य रकारस्य लोपः, पश्चादनेन सूत्रेण म्हकारादेश इति।

**ह्न-स्न-ष्ण-ह्ण श्नां ण्हः ॥ ३३ ॥**

ह्नादीनां ण्ह इत्ययमादेशो भवति। ह्नस्य।—वण्ही। जण्हू। स्नस्य।—ण्हाण। पण्हुद। ष्णस्य।—बिण्हू। कण्हो। ह्णस्य।—सण्हं। तिण्हं। श्नस्य।—पण्हो। सिण्हो। *

( वह्निः। जह्नुः। स्नानम्। प्रस्नुतम्। विष्णुः। कृष्णः। श्लक्ष्णम्। तीक्ष्णम्। प्रश्न.। शिश्न.। )

**चिह्ने न्धः ॥ ३४ ॥**

चिह्नशब्दे युक्तस्य "न्ध" इत्ययमादेशो भवति। चिन्ध।

**ष्पस्य फः ॥ ३५ ॥**

"ष्प" इत्येतस्य "फ" इत्ययमादेशो भवति। पुप्फ। सप्फ। णिप्फाओ। ( पुष्पम्। शष्पम्। निष्पाप:। ) †

**स्पस्य सर्वत्र स्थितस्य ॥ ३६ ॥**

"स्प" इत्येतस्य सर्वत्र स्थितस्य "फ" इत्ययमादेशो भवति। फसो। फंदण। ( स्पर्शः। स्पन्दनम्। ) ‡

---

* पण्हुदमिति।—प्राक् "सर्वत्र लवराम्" ( ३।३ ) इत्यनेन रलोपः, तत ण्हादेश, पश्चात् "ऋत्वादिषु तो द" ( २।७ ) इत्यनेन तस्य दत्वमिति। "पण्हो" "सण्हं" इत्यत्र च उक्तसूत्रेण रलयोर्लोप, ततो ण्हादेशः। तिण्हमित्यत्र ईकारस्य इकार, पश्चात् ण्हादेश।

† णिप्फाओ इति।—आदौ "नो ण सर्वत्र" ( २।४२ ) इत्यनेन नस्य णकारः, तत प्फादेश, पश्चात् अन्त्यस्य पस्य लोप। निष्पाक इत्यस्यापि ईदृश रूपमेव।

‡ सर्वत्रेति।—आदौ मध्ये अन्ते चेत्यर्थ., यत्र क्वचनस्थितस्यापि स्पस्य फकारादेशो भवतीति भाव। "फसो" "फंदण" इत्यत्र प्राक् फादेश, पश्चात "वक्रादिषु" ( ४।१५ ) इत्यनेन ( ) बिन्दुरागम जात., नस्य च णत्वमिति विवेकः।

**स्सि च ॥ ३७ ॥**

स्पस्य क्वचित् "स्सि" इत्ययमादेशो भवति । पाड़िसिद्धो । *
प्रतिस्पर्द्धिन् ।

**वाष्पेऽश्रुणि हः ॥ ३८ ॥**

वाष्पशब्दे "ष्प" इत्येतस्य हकारो भवति अश्रुणि वाच्ये ।
बाहो । अश्रुणि किम् ?—बप्फो । (वाष्पः=उष्मन् ।) †

**कार्षापणे ॥ ३९ ॥**

कार्षापणशब्दे युक्तस्य हकारो भवति । काहावणो । ‡

**श्च-त्स-प्सां छः ॥ ४० ॥**

एतेषां (युक्तस्य) छकारो भवति । श्चस्य ।—पच्छिमं ।
अच्छेर । त्सस्य ।—वच्छो । वच्छरो । प्सस्य ।—लिच्छा ।
जुगुच्छा ।

(पश्चिमम् । आश्चर्य्यम् । वत्सः । वत्सर. । लिप्सा । जुगुप्सा ।)

**वृश्चिके ञ्छः ॥ ४१ ॥**

वृश्चिकशब्दे श्चकारस्य "ञ्छ" इत्ययमादेशो भवति ।
विञ्छुओ । §

---

* स्पस्येति ।—क्वचिदिति निर्देशान्न सर्व्वत्रेति तात्पर्य्यम् । प्राक् "आ समृद्ध्यादिषु" (१।२) इत्यनेन अकारस्य आकार, तत "सवव लवराम्" (३।३) इत्यनेन रलोप, ततस्तस्थाने डकार, तत स्पस्थाने स्सि, ततो रलोपी द्वित्वञ्च, अन्त्यव्यञ्जनस्य च लोप इति यथायथमुन्नेयम् ।

† वाष्पेति ।—नेत्रजलार्थे गम्यमाने ष्पस्य हकार । उष्मार्थे तु आकारस्य अकार, 'ष्पस्य फ' (३।३५) इत्यनेन ष्पस्थाने फ', तस्य द्वित्वञ्चेति तात्पर्य्यम् ।

‡ काहावणो इति ।—आदौ र्षस्थाने हकार', तत 'पो व' (२।१५) इत्यनेन पस्थाने वकार, पश्चात् नस्य च णत्वमिति ।

§ विञ्छुओ इति ।—आदौ 'इदृष्यादिषु' (१।२८) इत्यनेन आदिस्थितस्य

## नोत्सुकोत्सवयोः ॥ ४२ ॥

"उत्सुक"-"उत्सव" इत्येतयोः "त्स" इत्येतस्य छकारो न भवति। "श्च-त्स-प्सां छः" इति प्राप्ते प्रतिषिध्यते। उस्सुओ। उस्सवो। *

## न्मो मः ॥ ४३ ॥

"न्म" इत्येतस्य "म" इत्ययमादेशो भवति अधोलोपे प्राप्ते। जम्मो। वम्महो। (जन्म। मन्मथः।) †

## म्न-ज्ञ पञ्चाशत् पञ्चदशेषु णः ॥ ४४ ॥

"म्न-ज्ञ" इत्येतयोः पञ्चाशत् पञ्चदशशब्दयोश्च युक्तस्य णकारो भवति। म्नस्य।—पज्जुण्णो। ज्ञस्य।— जण्णो। विण्णाणं। पण्णासा। पण्णरहो। ‡

( प्रद्युम्नः। यज्ञः। विज्ञानम्। पञ्चाशत्। पञ्चदश। )

---

ऋकारस्य इकारः, ततः "उदित्तु-वृश्चिकयोः" (१।१५) इत्यनेन इस्थाने उत्वम्, अनेन च सूत्रेण श्चस्थाने च्छकारः, पश्चात् ककारस्य लोप इति।

* उस्सुओ—उस्सवो इति।—अत्र "श्च-त्स-प्सां छः" (३।४०) इत्यनेन छकारे प्राप्तेऽपि अनेन सूत्रेण छकारो निषिध्यते, तेन प्राप्तिसत्त्वे निषेधोऽयमिति तात्पर्य्यम्, अन्यथा "उच्छुओ" "उच्छवो" इत्येवमेवाभविष्यदिति।

† वम्महो इति।—प्राक् "मन्मथे वः" (२।३९) इत्यनेन आदिस्थस्य मस्य वकारः, ततः अनेन सूत्रेण युक्तस्य "न्म" इत्यस्य "म्म" इत्यादेशः, पश्चाच्च "खघथधभां हः" (२।२७) इत्यनेन थस्य हत्वमिति ज्ञेयम्।

‡ पज्जुण्णो इति।—आदौ अधःस्थस्य "प्र" इत्यस्य रकारस्य लोपः, ततः "त्य थ्य-द्यां च-छ-जाः" (३।२७) इत्यनेन "द्य" इत्यस्य जकारो द्वित्वञ्च, पश्चात् "म्न" इत्यस्य णकारो द्विरुक्तिश्चेति। पण्णरहो इति।—प्राक् "ञ्च" इत्यस्य णकारस्तस्य द्वित्वञ्च, ततः "संख्यायाञ्च" (२।१४) इत्यनेन दकारस्य रकारः, पश्चात् "दशादिषु हः" (२।४४) इत्यनेन शस्य हत्वमिति ज्ञेयम्।

## तालवृन्ते ण्टः ॥ ४५ ॥

तालवृन्ते युक्तस्य "ण्ट" इत्ययमादेशो भवति । ताल-वेण्टग्रं ।

## भिन्दिपाले ण्डः ॥ ४६ ॥

भिन्दिपालशब्दे युक्तस्य "ण्ड" इत्ययमादेशो भवति । भिण्डिवालो ।

## विह्वले भ-ह्वौ वा ॥ ४७ ॥

विह्वलशब्दे युक्तस्य भकार-ह्वकारौ भवतो वा । वेब्भलो । विह्लो ।

## आत्मनि पः ॥ ४८ ॥

आत्मशब्दे युक्तस्य पकारो भवति । अप्पा । *

## क्मस्य ॥ ४९ ॥

"क्म" इत्येतस्य पकारो भवति । रुप्पं । रुप्पिणो । †
( रुक्मम् । रुक्मिणी । ) योगविभागो नित्यार्थः ।

## शेषादेशयोर्द्वित्वमनादौ ॥ ५० ॥

युक्तस्य यौ शेषादेशभूतौ तयोरनादौ वर्त्तमानयोर्द्वित्वं भवति । शेषस्य तावत् ।—भुत्तं । मग्गो । आदेशस्य ।—लट्ठी । दिट्ठी । हत्थो । अनादाविति किम् ?—खलिअं । खंभो । थवओ । ‡

---

* अप्पेति ।—"लज्जा गुरुई परवसी अप्पा" इति शकुन्तला ।

† रुप्पमिति ।—अकारान्त क्लीवलिङ्गो रुक्मशब्दोऽस्ति, तेन "क्म" इत्यस्य पकारे, तस्य च द्वित्वे कृते रुप्पमिति सिद्धम् । रुक्मन् इत्येवमस्य नान्तत्वात अन्तस्य व्यञ्जनस्य लोपे कृते ( ४।६ ) रुप्पमिति सिद्धमिति ।

‡ युक्तस्येति ।—युक्तस्य संयुक्तवर्णस्य, यौ शेषादेशौ शेषस्य आदेशस्य तौ, उक्ता-

( भुक्तम् । मार्गः । यष्टिः । दृष्टिः । हस्तः । स्खलितम् । स्तम्भः । स्तवकः । )

वर्गेषु युजः पूर्वः ॥ ५१ ॥

युक्तस्य यौ शेषादेशावनादिभूतौ तयोर्द्वित्वेऽपि विहिते अधऊर्द्ध्वेन यो वर्गेषु वर्णौ द्वितीयश्चतुर्थो वा विहितस्तस्य पूर्वः प्रथमस्तृतीयो वा भवति । वर्गेषु युग्मस्य द्वितीयस्य प्रथमः चतुर्थस्य तृतीयो द्वित्वेन विधीयते । अयुग्मयोः प्रथमतृतीय-पञ्चमरूपयोः शेषादेशयोस्तु तावेव भवतः ।

शेषस्य ।—वक्खाणं । अग्घो । मुच्छा । णिज्झरो । लुद्धो । णिब्भरो । आदेशस्य ।—दिट्ठो । लट्ठी । वच्छो । विप्फरिसो । णित्थारो । जक्खो । लच्छी । अट्ठी । पुप्फं । *

---

दन्यच्छेष इति तात्पर्य्यम् । किम्भूतौ तौ ? अनादौ वर्त्तमानौ मध्यस्थितौ अन्तस्थितौ चेत्यर्थ । तादृशयोर्द्वित्व स्यादिति । "भुत्त-मग्गो" इति पदद्वय शेषोदाहरणस्वरूप-मिति । अनयो सूत्र प्राक् नोट्टङ्कितमिति भाव. । लट्ठीत्यादीनि च आदेशस्यो-दाहरणानीति ज्ञेयानि । खलिअमित्यादीना त्रयाणामादिस्थितसंयुक्तवर्णपरतया लोपादनन्तर न द्वित्वमिति विवेक्तव्यम् ।

युक्तस्य याविति ।—अनेन सूत्रेण तावद् द्वित्वस्य प्रणाली स्फुटीकरोतीति । सूत्रार्थमाह ।—अनादिभूतौ नादिस्थितौ यौ द्वौ सयुक्तवर्णस्य शेषादेशौ, तयोः शेषा-देशयोर्द्वित्वे कृतेऽपि अधऊर्द्ध्वेन अध क्रमेण ऊर्द्ध्वक्रमेण च ऊर्द्ध्वाध'स्थितिरीत्येति यावत् । वर्गेषु कादिमान्तेषु वर्णेषु मध्ये यो द्वितीय खछठथफरूप, अथवा चतुर्थो घझढधभरूपो वर्णः कृत, तस्य द्वितीयस्य पूर्वं चादिस्थित वर्ण प्रथम कचटतपरूपो भवति, किवा चतुर्थस्य तृतीय गजडदबरूपो भवतीति तात्पर्य्यम् । वर्गेष्विति ।— वर्गेषु मध्ये युग्मस्य संयुक्तवर्णस्य, यो द्वितीयवर्णस्तस्य प्रथमवर्णस्य द्विरुक्तिः, अथवा चतुर्थे वर्णे सति तस्य तृतीयवर्णस्य द्विरुक्तिर्भवतीत्यर्थः । अयुग्मयोरिति ।—अयुग्मयो-रसयुक्तयो. प्रथमवर्ण-तृतीयवर्ण-पञ्चमवर्णस्वरूपयो शेषादेशयो. पुनस्तावेव तादृशा-वेव, प्रथम तृतीय-पञ्चमवर्णरूपावेव भवत , द्वित्वेन विधीयेते इति तात्पर्य्यं ज्ञेयम् ।

(व्याख्यानम्। अर्घः। मूर्च्छा। निर्झरः। लुब्धः। निर्भरः। दृष्टिः। यष्टिः। वत्सः। विस्मर्शः। निस्तारः। यत्नः। लक्ष्मीः। अस्थि। पुष्पम्।)

## नीड़ादिषु ॥ ५२ ॥

नीड इत्येवमादिषु अनादौ वर्त्तमानस्य च द्वित्वं भवति। णेड्ड। "एन्नीडापीड—" (१।१९) इत्यादिना एत्वम्। सोत्तं। पेम्मं। वाहित्तं। उज्जुओ। जसओ। जोव्वणं। *

(नीडम्। स्रोतस्। प्रेमन्। व्याहृतम्। ऋजुः। जनकः। यौवनम्।)

## आम्रताम्रयोर्वः ॥ ५३ ॥

"आम्र-ताम्र" इत्येतयोर्द्वित्वेन बकारो भवति। अंबं। तब। (आम्रम्। ताम्रम्।) †

---

वक्खाणमिति।—वक्खाणमित्यारभ्य णिब्भरो इत्यन्त यावत् एतेषां सयुक्ताना मच न क्वतम, अतएव शेषत्वेनैतान्युदाहृतानीति तात्पर्य्यम्। दिट्ठीत्यारभ्य पुप्फमित्यन्त यावदेषा सूत्रनिर्देशादेतानि आदेशत्वेनोदाहृतानीति बोध्यमिति।

* णीडेति।—नीड इत्येवमादिषु इत्येवप्रकारेषु शब्देषु, अनादौ वर्त्तमानस्य अनादिस्थितस्य असयुक्तस्य वर्णस्य डकारस्य द्वित्वम्। "एन्नीडापीड—" (१।१९) इत्यादिना ईकारस्यैकार इति। सोत्तमिति।—अस्य प्राक् अधोवर्त्तिनो रकारस्य लोप, तत तस्य द्वित्व, ततोऽन्तस्थितस्य व्यञ्जनस्य सकारस्य लोप इति बोध्यम्। पेम्ममित्यत्रापि रलोप, मस्य द्वित्वम्, अन्तस्थितव्यञ्जनस्य च लोप इति। वाहित्त-मिति।—अत्र आदौ यलोप', तत "इदृष्यादिषु" (१।२८) इत्यनेन आदिस्थस्य ऋकारस्य इकारः, ततस्तकारस्य द्वित्वमिति। उज्जुओ इति।—अत्र "उदृत्वादिषु" (१।२९) इत्यनेन ऋस्थाने उकार., तत' असयुक्तस्य जकारस्य द्वित्वम्। जोव्वणमिति।—प्राक् "औत ओत्" (१।४१) इत्यनेन औस्थाने ओकार', ततः असयुक्तस्य बकारस्य द्वित्व, ततो नस्थाने णकार इति। णेड्डादीनि सर्वाणि असयुक्तवर्णानां द्वित्वसूचकान्युदाहरणानीति तात्पर्य्यमुन्नेयमिति।

† अवमिति।—प्राक् "अदातो यथादिष वा" (१।१०) इत्यनेन आकारस्य

**न रहोः ॥ ५४ ॥**

रेफ-हकारयोर्द्वित्वं न भवति। धीरं। तूरं। जीहा। बाहो। ( धैर्य्यम्। तूर्य्यम्। जिह्वा। वाष्पः। ) *

**आङो ज्ञस्य ॥ ५५ ॥**

आङ उत्तरस्य "ज्ञ" इत्येतस्यादेशस्य द्वित्वं न भवति। आणा। आणत्ती। (आज्ञा। आज्ञप्तिः।) आङ इति किम्?—सण्णा। (सञ्ज्ञा।) †

**न बिन्दुपरे ॥ ५६ ॥**

अनुस्वारपरे द्वित्वं न भवति। संकंतो। संझा। ( संक्रान्तः। सन्ध्या। ) ‡

**समासे वा ॥ ५७ ॥**

---

अकारः, ततो द्वित्वेन वकारः, पश्चात् "वक्रादिषु" ( ४।१५ ) इत्यनेन बिन्दुरागमः। एव तवमित्यत्रापीति ज्ञेयम्।

धीरमिति।—"ईद्धैर्य्ये" ( १।३९ ) इत्यनेन प्राक् ऐकारस्य ईकारः, ततः "तूर्य्यधैर्य्य—" ( ३।१८ ) इत्यादिना सूत्रेण र्यस्य रकारः, ततोऽनेन द्वित्वनिषेधः। जीहेति।—आदौ अधःस्थितस्य वकारस्य लोपः, ततो द्वित्वनिषेधः। बाहो इति।—"वाष्पेऽश्रुणि ह—" ( ३।३८ ) इत्यनेन "ष्प" इत्यस्य हकारः, पश्चाद् द्वित्वनिषेधः इति। ऊष्मार्थे तु बप्फो इत्यवगन्तव्यम्।

† आणेति।—आदौ "म्न-ज्ञ—" ( ३।४४ ) इत्यादिना सूत्रेण "ज्ञ" इत्यस्य णकारः, ततः आङ्पूर्वकत्वादस्य अनेन सूत्रेण द्वित्वप्रतिषेधः। सण्णेत्यत्र आङ्पूर्वकत्वाभावात् णस्य द्विरुक्तिरित्यवधेयमिति भावः।

‡ संकंतो इति।—आदौ अधोवर्त्तिनो रकारस्य लोपः, ततः "अदातो—" ( १।१० ) इत्यादिना आकारस्य अकारः, ततोऽनुस्वारागमः, पश्चाद् बिन्दुपरत्वाद् द्वित्वनिषेध इति। संझेति।—प्राक् "ध्यह्यो र्झः" ( ३।२८ ) इत्यनेन "ध्य" इत्यस्य झकारः, मध्ये "सम्" इत्यस्य मस्थानेऽनुस्वारः, ततोऽनुस्वारपरत्वेन अनेन सूत्रेण द्वित्वप्रतिषेध इति।

समासे शेषादेशयोर्वा द्वित्वं भवति। णइग्गामो—णई-गामो। कुसुमप्पअरो—कुसुमपअरो। देवत्थुई—देवथुई। आणालक्खंभो—आणालखंभो। *

(नदीग्रामः। कुसुमप्रकरः। देवस्तुतिः। आलानस्तम्भः।)

**सेवादिषु च ॥ ५८ ॥**

सेवा इत्येवमादिषु चानादौ वा द्वित्वं भवति। सेव्वा—सेवा। एक्कं—एअं। णक्खो—णहो। देव्वं—दइवं। असिव्व—असिवं। तेल्लोक्कं—तेलोअं। णिहित्तो—णिहिओ। तुण्हिक्को—तुण्हिओ। कण्णिआरो—कणिआरो। दिग्घं—

---

* णइग्गामो इति।—णइग्गामो इत्यादिषु सर्वत्रैव समासे, समासात् विकल्पेन द्वित्वम्। कुसुमप्पअरो इत्यादिषु "प्र-स्त" इत्येतेषां यथाक्रमं वर्णलोपे पः, स्तस्य थ, स्तम्भ इत्यत्र स्तस्य ख., पश्चात् द्वित्वमिति ज्ञेयम्। आलानेत्यत्र आणालेति "आलाने लनौ" (४।२९) इति सूत्रेण सिद्धम्।

† एक्कमित्यादि।—आदौ अनादिस्थितस्य ककारस्य द्वित्वम्। एअमिति।—अत्र कस्य लोप। णक्खो इति।—आदौ नस्य णकार, तत कवर्गीय-प्रथमवर्णस्य ककारस्य द्वित्वम्। णहो इति।—अत्र "खघथ—" (२।२७) इत्यादिना खस्य हकार। देव्वमिति।—आदौ "ऐत एत्" (१।३५) इत्यनेन ऐस्थाने एकार', ततो वकारस्य द्वित्वम्। द्वित्वाभावपक्षे तु "दैत्यादिष्वइ" (१।३६) इत्यनेन सूत्रेण ऐकारस्य "अइ" इत्यादेश इति ज्ञेयम्। असिव्वमित्यादीना पदसिद्धिप्रणाली व्याचष्टे।—आदौ शस्य सकार, ततो वकारस्य द्वित्वम्। असिवमित्यत्र द्वित्वाभाव। तेल्लोक्कमिति।—प्राक् अध स्थितस्य रकारस्य लोप, तत "ऐत एत्" (१।३५) इत्यनेन ऐकारस्य एकार., तत असयुक्तस्य लस्य कस्य च द्वित्वम्। द्वित्वाभावपक्षे तु अन्तस्थस्य कस्य लोप इति बोध्यम्। णिहित्तो इति।—पूर्वं नकारस्य णत्व, ततस्तकारस्य द्वित्वञ्च। अन्यत्र तु तस्य लोप इति। तुण्हिक्को इति।—आदौ ऊकारस्थाने उकार', तत "क्न-स्न-ष्ण—" (३।३३) इत्यादिना "ष्ण" इत्यस्य ण्ह इत्यादेश, पश्चात् ककारस्य द्वित्वम्। द्वित्वाभावपक्षे तु कस्य लोप.। कण्णिआरो इति।—प्राक् "र्णि" इत्यस्य रकारलोप, ततो द्वित्वं, तत कस्य लोप.। द्वित्वाभावे तु कणिआरो

दोहं। रत्ती—राई। दुक्खिओ—दुहिओ। अस्सो—असो। इस्सरो—ईसरो। बिस्सासो—बीसासो। णिस्सासो—णीसासो। रस्सी—रसी। मित्तो—मिओ। पुस्सो—पुसो।

( सेवा। एकम्। नखः। दैवम्। अशिवम्। त्रैलोक्यम्। निहितः। तूष्णीकः। कर्णिकारः। दीर्घम्। रात्रिः। दुःखितः। अश्वः। ईश्वरः। विश्वासः। निश्वासः। रश्मिः। मित्रः। पुष्यः।)

उभयत्र विभाषेयं सेवादीनामप्राप्ते दीर्घादीनाञ्च प्राप्ते। †

---

इति। दिग्घमिति।—आदौ ईकारस्थाने इकार, तत "र्घ" इत्यस्य रलोप, तत कवर्गीय-तृतीयवर्णस्य गकारस्य द्वित्वम्। द्वित्वाभावपक्षे तु घस्य हकार। रत्तीति।—आदौ "अदातो—" (११०) इत्यादिना आस्थाने अकारः, "त्रि" इत्यस्य रलोप, ततो द्वित्वम्, इकारस्य ईत्वञ्च। अन्यत्र तु आदौ रलोप, पश्चात् तकारलोप इकारस्य दीर्घत्वञ्चेति ज्ञेयम्। दुक्खिओ इति।—आदौ विसर्गलोप, तत कवर्गस्य प्रथम-वर्णस्य द्वित्व, पश्चात तलोप। अन्यत्र खस्य हकार। अस्सो इति।—प्राक् वलोप, शस्थाने च सकार, तत. सकारस्य द्वित्वम्। द्वित्वाभावपक्षे असो इति। इस्सरो इति।—आदौ ईकारस्य इकारः, ततो वलोप, सस्य द्वित्वञ्च। अन्यच ईसरो इति। बिस्सासो इति।—आदौ वलोप, तत सकारस्य द्वित्वम्। अन्यच बीसासो इति। णिस्सासो इति।—आदौ नस्य णत्व, तत. वलोप, पश्चात सकारस्य द्वित्वम्। णीसासो इति।—आदौ निपातनात् निस्थाने "णी", ततो वलोप, शस्य सत्वञ्च। रस्सीति।—आदौ "श्मि" इत्यस्य मलोप, तत शस्थाने स, दीर्घश्च। अन्यत्र रसीति। मित्तो इति।—प्राक् "त्र" इत्यस्य रलोप ततस्तकारस्य द्वित्वम्। अन्यत्र तलोपे कृते मिओ इति। पुस्सो इति।—आदौ "ष्य" इत्यस्य यलोप, तत षस्थाने स, द्वित्वञ्च। अन्यत्र पुसो इति। पदसाधनोपयोगीनि सूत्राणि तु यथायथं विविच्य अनुसन्धेयानीति सर्वं पुष्कलमिति। उभयत्रेति।—सेवादीना कर्णिकारान्ताना शब्दानामप्राप्तिसत्त्वे, दीर्घादीना पुष्यान्तानाञ्च शब्दानां प्राप्तिसत्त्वे वैकल्पिकत्वनिर्देशादुभयत्रेत्युक्तमिति भावः।

**विप्रकर्षः ॥ ५९ ॥**

अधिकारोऽयम् । आ परिच्छेदसमाप्तेर्युक्तस्य विप्रकर्षो भवति । *

**क्लिष्ट-श्लिष्ट-रत्न-क्रिया-शार्ङ्गेषु तत्स्वरवत् पूर्वस्य ॥ ६० ॥**

क्लिष्टादिषु युक्तस्य विप्रकर्षो भवति । विप्रकृष्टस्य च यः पूर्वो वर्णो निरर्थस्तस्य तत्स्वरता भवति । तेनैव पूर्वेण स्वरेण पूर्वो वर्णः सार्थो भवतीत्यर्थः । †

किलिट्ठं । सिलिट्ठं । रअणं । किरिआ । सारंगो ।

**कृष्णे वा ॥ ६१ ॥**

कृष्णशब्दे युक्तस्य वा विप्रकर्षो भवति, पूर्वस्य च तत्स्वरता । व्यवस्थितविभाषेयम् । तेन वर्णे नित्य विप्रकर्षः । विष्णौ तु न भवत्येव । कसणो । कण्हो । ‡

---

* अधिकारोऽयमिति ।—परिच्छेदसमाप्तिपर्य्यन्त संयुक्तवर्णस्य विप्रकर्षं असन्निकर्षं प्रकृत्यवयवाद्द दूरावस्थानमिति यावत, भवतीत्ययमेवाधिकारार्थ इति ।

† संयुक्तवर्णस्यैव विप्रकर्षसञ्ज्ञाविधानाद्द विप्रकृष्टस्य विप्रकर्षसञ्ज्ञाप्राप्तस्य य पूर्व पूर्ववर्त्ती निरथ अर्थहीन., वर्ण· अत्तर, विद्यत इति शेष, तस्य निरर्थकस्य वर्णस्य, ततस्वरता भवतीत्युक्तम् । अधुना वृत्तिकारेण स्वयमेव तत्स्वरता व्याख्यायते तेनैवेति ।—तेनैव पूर्ववर्त्तिना स्वरेण स्वरता अर्थात् पूर्ववर्त्ती वर्ण सार्थको भवतीति तात्पर्य्यम् , अतएव "क्लि" इत्यत्र "किलि", "श्लि" इत्यत्र "सिलि" "त्न" इत्यत्र "अण", "क्रि" इत्यत्र "किरि", "ङ्ग" इत्यत्र च "रंगो" इत्येव रूपाणि जातानीति भाव ।

‡ व्यवस्थितेति ।—इयमीदृश्येव विकल्पव्यवस्था । विभाषाव्यवस्थामाह तेनति ।—तेन हेतुना, वर्णे कृष्णशब्दस्य वर्णवाचकत्वे, नित्यमेव विप्रकर्षसञ्ज्ञा । विष्णौ नारायणार्थे पुनर्विप्रकर्षो नैव भवतीति तात्पर्य्यम् । कसणो इति वर्णे, कण्हो इति विष्णौ उदाहृतम् । अतएवेय व्यवस्थितविभाषा बोद्धव्येति भाव ।

**इः श्री-ह्री-क्रीत-क्लान्त-क्लेश-म्लान-स्वप्न-स्पर्श-हर्षार्ह-गर्हेषु ॥ ६२ ॥**

एषु युक्तस्य विप्रकर्षो भवति। पूर्वस्य इकारः तत्स्वरता च भवति। सिरी। हिरी। किरीतो। किलतो। किलेसो। मिलाणं। सिविणो। फरिसो। हरिसो। अरिहो। गरिहो।*

( श्रीः। ह्रीः। क्रीतः। क्लान्तः। क्लेशः। म्लानम्। स्वप्नः। स्पर्शः। हर्षः। अर्हः। गर्हः। )

**अः क्ष्मा-श्लाघयोः ॥ ६३ ॥**

"क्ष्मा—श्लाघा" इत्येतयोर्युक्तस्य विप्रकर्षो भवति, पूर्वस्य अकारस्तत्स्वरता च भवति। खमा। सलाहा।†

**स्नेहे वा ॥ ६४ ॥**

स्नेहशब्दे युक्तस्य विप्रकर्षो वा भवति, पूर्वस्य च अकारस्तत्स्वरता च भवति। सणेहो—णेहो।‡

---

* सिरीति।—श्रीशब्दस्य आदौ रलोपः, ततः शस्थाने सः, ततः पूर्ववर्णस्य इकारः, तत्स्वरता च। अकृते पूर्वस्य इकारत्वे "सीरी" इत्येव भवितुं शक्यमिति भावः। किलतो इत्यत्र पूर्वस्य इकारः, आकारस्य अकारश्च। सिविणो इत्यत्र "इदीषत्पक्वस्वप्न—" (१।३) इत्यादिना आदिस्थितस्य अकारस्य इकारः, ततः पूर्वस्य इकारः, ततः पस्थाने वकारः, नस्य च णत्वमिति। फरिसो इत्यत्र प्राक् "स्प" इत्यस्य "फ", पूर्वस्य इकारः, ततः शस्य सकारश्च।

† खमेति।—"क्षमावृक्षक्षणेषु वा" (३।३१) इत्यनेन वैकल्पिकः क्षकारस्य छकारः, तेन छमेति। पक्षे "ष्क-स्क-क्षां खः" (३।२९) इत्यनेन क्षस्य खकारः, पश्चादनेन सूत्रेण संयुक्तस्य विप्रकर्षसंज्ञा। पूर्वस्य अकारस्तत्स्वरता च। सलाहेति।—आदौ शकारस्य सकारः, पूर्वस्य अकारस्तत्स्वरता च, पश्चात् "खघथधभां हः" (२।२७) इत्यनेन घकारस्य हकार इति।

‡ सणेहो इति।—आदौ युक्तवर्णस्य विप्रकर्षसंज्ञा वैभाषिकी, ततः पूर्ववर्णस्य अकार इति। पक्षे "अधो मनयाम्" (३।२) इत्यनेन संयुक्तस्य अधोवर्ण-नकारस्य

## उः पद्मतन्वीसमेषु ॥ ६५ ॥

पद्मशब्दे तन्वी इत्येवंसमेषु च युक्तस्य विप्रकर्षो भवति, पूर्वस्य च उकारस्तत्स्वरता च भवति। पउमं। तणुई। लहुई। *

## ज्यायामीत् ॥ ६६ ॥

ज्याशब्दे युक्तस्य विप्रकर्षो भवति, पूर्वस्य च ईकारस्तत्स्वरता च भवति। जीआ। †

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ युक्तवर्णविधिर्नाम तृतीयः परिच्छेद।

---

लोप., नस्य च णत्वं, तेन "णेह्णो" इत्येव सिद्धमिति। इह "क्न-स्न ण—" (३।३३) इत्यस्य सूत्रस्य नावसरः, अत्र अन्तवर्णस्यैव "ण्ह" इत्येव कार्य्यदर्शनादिति।

* पउममिति।—पद्मशब्दे विप्रकर्षसञ्ज्ञा भवति, तथा तन्वी इत्येवंसमेषु इत्येव शब्दसदृशेषु च, संयुक्तवर्णस्य विप्रकर्षसञ्ज्ञा स्यात। तत पूर्वस्य उकारस्तत् स्वरता च। आदौ पद्मशब्दस्य युक्तस्य विप्रकर्षसञ्ज्ञा, तत. दकारलोपः, तत पूर्वस्य उकार इति, इत्थ पउममिति पद सिद्धमिति। तनुईत्यत्र विप्रकर्षसञ्ज्ञां कृत्वा वलोपे कृते पूर्वस्य उकारस्तत्स्वरता च। लहुईत्यत्र सर्वं पूर्ववत्, ततो घकारस्य हकार।

† जीअेति।—ज्याशब्दस्य पूर्वं विप्रकर्षसञ्ज्ञा, तत पूर्वस्य च ईकार, ततो यलोपे कृते आकारमात्रावशिष्टत्वात् "जीआ" इति बोध्यम्।

## अथ चतुर्थः परिच्छेदः ।

### सन्धावचामज्लोपविशेषा बहुलम् ॥ १ ॥

अचामिति प्रत्याहारग्रहणम्, अजिति च। सन्धौ वर्त्तमानानामचां स्थाने अज्विशेषा लोपविशेषाश्च बहुलं भवन्ति।

अज्विशेषास्तावत् ।—जउणअडं—जउणाअडं। णइसोत्तो—णईसोत्तो। बहुमुहं—बहूमुहं। कण्णउरं—कण्णऊरं। सिरोवेअणा—सिरवेअणा। पोआपोअं—पिआपिअं। सीआसीअं—सिआसिअं। सरोरुहं—सररुहं।

( यमुनातटम्। नदीस्रोतस्। बधूमुखम्। कन्यापुरम्। शिरोवेदना। पीतापीतम्। शीताशीतम्। सरोरुहम्। )

लोपविशेषाः ।—राउलं—राअउलं। तुहद्धं—तुहअद्धं। महद्धं—महअद्धं। बावडणं—बाअवडणं। कुंमारो—कुंभआरो। पवणुद्धअं—पवणउद्धअं।

( राजकुलम्। तवार्द्धम्। ममार्द्धम्। वातपतनम्। कुम्भकारः। पवनोद्धतम्। )

सयोगपरे सर्वत्र पूर्वस्याचो लोपः। क्वचिन्नित्यं क्वचिदन्यदेव बहुलग्रहणात्। तेनान्यदपि लाक्षणिकं कार्य्यं भवति। *

---

* अचामिति।—प्रत्याहारग्रहणं प्रत्याहारसञ्ज्ञाग्रहणमित्यर्थः। सन्धौ वर्त्तमानानां सन्धिस्थितानाम्, अचां स्वरवर्णानां स्थाने, बहुलं बाहुल्येन, अज्विशेषाः स्वरवर्णविशेषाः, लोपविशेषा लोपभेदाश्च भवन्तीत्यर्थः। जउणअडमित्यत्र स्थले एकत्र "ण", अन्यत्र च "णा", इत्येवं स्वरविशेषो दृश्यते। एवमन्यत्रापि द्रष्टव्यम्। राउलमिति।—राउलं राअउलमित्यादौ एकत्र लोपः, अन्यत्र न लोपः, इत्थं लोपविशेषो दृश्यते इति तात्पर्य्यम्। सयोगेति।—संयुक्तवर्णे परवर्त्तिनि सति,

**उदुम्बरे दोर्लोपः ॥ २ ॥**

उदुम्बरशब्दे "दु" इत्यस्य लोपो भवति । उबरं ।

**कालायसे यस्य वा ॥ ३ ॥**

कालायसशब्दे यस्य वा लोपो भवति । कालासं—काला-असं ।

**भाजने जस्य ॥ ४ ॥**

भाजनशब्दे जकारस्य लोपो वा भवति । भाणं—भाअणं ।

**यावदादिषु वस्य ॥ ५ ॥**

यावदित्येवमादिषु वकारस्य वा लोपो भवति । जा—जाव । ता—ताव । पाराओ—पारावओ । अणुत्तंत—अणुवत्तंत । जीअं—जीविअं । एअं—एव्वं । एअ—एव्व । कुअलअं—कुवलअं ॥ *

( यावत् । तावत् । पारावतः । अनुवर्त्तमानः । जीवितम् । एवम् । एव । कुवलयम् । इत्येवमादयः । )

---

सर्वस्मिन्नेव स्थले, पूर्वस्य पूर्ववर्त्तिन, अच स्वरवर्णस्य, लोप स्यादित्यर्थ । सूत्रे बहुलग्रहणाद् बाहुल्यनिर्देशात, क्वचित् कुत्रचित, नित्यमेव लोप इति शेष , क्वचित् कुत्रचित्, अन्यदेव अन्यप्रकारमेव, भवतीत्यर्थ । तेन हेतुना, अन्यदपि अन्यप्रकारमपि, लाक्षणिक लक्षणसक्रान्त, कार्य्यं विधान, भवतीति । बाहुल्य-लक्षणमित्यमुक्तम् । यथा,—

"वर्णागमो वर्णविपर्य्ययश्च क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधान बहुधा समीक्ष्य चतुर्विध बाहुलक वदन्ति ॥" इति ।

* "सेवादिषु च" ( ३।५८ ) इत्यनेन सूत्रेण "एव्वं" "एव्व" इत्यत्र द्वित्वम् । पक्षे "एअ" "एअ" इति । "जा" "जाव" "ता" "ताव" इत्यादौ तु "कालायसे यस्य वा" ( ४।३ ) इत्यस्मात् विकल्पकार्य्यं लब्धमिति तात्पर्य्यं ज्ञेयम् ।

**अन्त्यस्य हलः ॥ ६ ॥**

वेति निवृत्तम्। शब्दानां योऽन्त्यो हल् तस्य लोपो भवति। जसो। णहं। सरो। कम्मो। जाव। ताव। *

( यशस्। नभस्। सरस्। कर्म्मन्। यावत्। तावत्। )

**स्त्रियामात् ॥ ७ ॥**

स्त्रियां वर्त्तमानस्यान्त्यहल आकारो भवति। सरिआ। पडिवआ। वाआ। ( सरित्। प्रतिपद्। वाच्। ) †

**रो रा ॥ ८ ॥**

स्त्रियामन्त्यस्य हलो रेफस्य "रा" इत्ययमादेशो भवति। धुरा। गिरा। ‡

**न विद्युति ॥ ९ ॥**

विद्युच्छब्दे आकारो न भवति। विज्जू। §

**शरदो दः ॥ १० ॥**

शरच्छब्दस्यान्त्यहलो दो भवति। सरदो। ¶

---

* शब्दानामिति।—शब्दानामन्तस्थितस्य व्यञ्जनवर्णस्य लोपो भवति। "न-सान्त—" (४।१८) इत्यादिना "यशस्—सरस्—कर्म्मन्" इत्यादीना पुलिङ्गवत कार्य्य ज्ञेयम्। नभस्शब्दस्य व्यभिचारो दृश्यते। "न शिरोनभसी" (४।१९) इत्यादिना नभस्शब्दस्य पुलिङ्गवत् प्रयोगो निषिद्ध एव। ततो भकारस्य हकारत्वात् णहमिति सिद्धमिति भाव:।

† सरिआ इति।—सरित्प्रभृतीना स्त्रोलिङ्गत्वादन्तस्थितव्यञ्जनवर्णस्य आकार.।

‡ धुरेति।—धुर् प्रभृतीनामन्त्यव्यञ्जनवर्णस्थाने राकार.।

§ विद्युच्छब्दस्य आकारनिषेध। "त्य-थ्य-द्या च-छ-जा:" (३।२७) इत्यनेन द्यस्थाने जकार', तत: जकारस्य द्वित्व, तलोपश्च।

¶ शरच्छब्दस्य अन्तस्थितव्यञ्जनस्य दकार।

**दिक्प्राव्रषोः सः ॥ ११ ॥**

दिक्शब्दस्यान्त्यहलः प्राव्रट्शब्दस्यापि सकारो भवति । दिसा । पाउसो । *

**मो बिन्दुः ॥ १२ ॥** †

अन्त्यस्य हलो मकारस्य बिन्दुर्भवति । अच्छं । वच्छं । भद्दं । अग्गिं । दट्ठं । वणं । धणं ।

( अच्चम् । वत्तस् । भद्रम् । अग्निम् । दष्टम् । वनम् । धनम् । )

**अचि मश्च ॥ १३ ॥**

अचि परतो मो भवति वा । फलमवहरइ—फलं अवहरइ । (फलमपहरति ।) ‡

**नञोर्हलि ॥ १४ ॥**

नकार-ञकारयोर्हलि परतो बिन्दुर्भवति मकारश्च । नस्य ।—अंसो—अम्सो । कंसो—कम्सो । ञस्य ।—वंचणीअं—वम्चणीअं । विंझो—विम्झो । §

( अंसः । कंसः । वञ्चनीयम् । विन्ध्यः । )

---

* दिसेति ।—अनयोस्तु सकारागम ।

† बिन्दुरनुस्वार इत्यर्थ ।

‡ अचीति ।—स्वरवर्णे परे सति मस्थाने विकल्पेन मकार , एकत्र अनुस्वार, अन्यत्र तु मकार , तेन पदद्वयमिति तात्पर्य्यम् ।

§ असो-कसो इति ।—आदौ "अन्स" "कन्स" इत्येवंरूपं स्थितम् । उभयत्रैव श-सयोर्व्यञ्जनवर्णयो परवर्त्तित्वात एकत्र नस्थाने अनुस्वार, अन्यत्र च मकार इति । वञ्चनीयमित्यत्र चकारस्य व्यञ्जनत्वात् ञस्थाने अनुस्वार मकारश्च । विन्ध्य इत्यत्र "व्यह्योर्झं" ( ३।२८ ) इत्यनेन ध्यस्थाने झकार, ततो ञकारयुक्ततया अनेन सूत्रेण ञस्थाने अनुस्वारो मकारागमश्चेति बोध्यम् ।

## वक्रादिषु ॥ १५ ॥

वक्रादिषु शब्देषु बिन्दुरागमो भवति। वंकं। तंस। हंसो। अंसू। मंसू। गिंठो। मंथं। मणंसिणी। दंसणं। फंसो। बंसो। पड़िंसुदं। अंसो। अहिमुंको। *

( वक्रम्। त्र्यस्रम्। चस्रः। अश्रु। श्मश्रु। गृष्टिः। मस्तम्। मनस्विनी। दर्शनम्। स्पर्शः। वर्णः। प्रतिश्रुतम्। अश्वः। अभिमुक्तः। ) इत्यादयः।

---

वंकमिति।—आदौ "क्र" इत्यस्य रलोपः, ततोऽनुस्वार इति। तंसमिति।—प्राक् "त्र" इत्यस्य रकार-यकारयोर्लोपः, ततोऽनुस्वारः, पश्चात् "स्र" इत्यस्य च रलोप इति। हंसो इति।—आदौ चस्थाने हकारः, ततः अनुस्वारागमः, ततो रलोपः, इत्थं "चस्र" स्थाने "हंसो" इति सिद्धम्। अंसू इति।—प्राक् अनुस्वारः, ततो रलोपः, ततश्च शस्थाने सकारः। मंसू इति।—आदौ संयुक्तस्य शकारस्य लोपः, ततोऽनुस्वारागमः, ततो रलोपः, पश्चात् शस्थाने सकार इति। गिंठीति।—आदौ "इदृष्यादिषु" (१।२८) इत्यनेन ऋस्थाने इकारः, ततोऽनुस्वारः, ततः संयुक्तस्य षकारस्य लोपः, ततष्टस्थाने ठकारः, इकारस्य ईकार इति, पक्षे,—गिट्ठीति। मंथमिति।—आदावनुस्वारः, पश्चात् "स्त" इत्यस्य थकारः। मणंसिणीति।—पूर्वं नस्थाने णकारः, ततोऽनुस्वारः, ततो वकारलोपः, ततः पुनर्नस्थाने णकारश्चेति। दंसणमिति।—आदावनुस्वारः, ततः "र्श" इत्यस्य रलोपः, ततः शस्थाने सकारः, नस्थाने णकारश्च। फंसो इति।—प्राक् "स्प" इत्यस्य फकारः, ततोऽनुस्वारः, ततः "र्श" इत्यस्य रलोपः, शस्थाने सकारश्चेति। वंसो इति।—आदावनुस्वारः, ततो "र्ण" इत्यस्य रलोपः। "वणो" इति पाठस्तु समीचीन एवेति। पडिंसुदमिति।—आदौ "प्र" इत्यस्य रलोपः, ततस्तस्थाने डकारः, ततोऽनुस्वारः, ततः "श्रु" इत्यस्य रलोपः, शस्थाने सकारः, पश्चात् तस्थाने दकार इति। अंसो इति।—प्रागनुस्वारः, ततः "श्व" इत्यस्य वलोपः, ततः शस्थाने सकार इति। अहिमुंको इति।—आदौ "भि" इत्यस्य भस्थाने हकारः, ततोऽनुस्वारः, ततः "क्त" इत्यस्य तलोप इति। एतेषां पूर्वकथितानि सूत्राणि यथायथं द्रष्टव्यानीति।

## मांसादिषु वा ॥ १६ ॥

मांसादिषु शब्देषु वा बिन्दुः प्रयोक्तव्यः। मसं—मासं। कहं—कह। णूणं—णूण। तहिं—तहि। असुं—असु।

तदयमपठितो मांसादिर्गणः। यत्र क्वचिद्वृत्तभङ्गभयात् त्यज्यमानः क्रियमाणश्च बिन्दुर्भवति स मांसादिषु द्रष्टव्यः। *

## ययि तद्वर्गान्तः ॥ १७ ॥

ययि परतो बिन्दुस्तद्वर्गान्तो वा भवति। सङ्का। सङ्खो। अङ्को। अङ्गं। सञ्चरइ। सण्ठो। सन्तरइ। सम्पत्ती। ययीति किम्?—अंसो। वाधिकारात्।—पंकं। बिंदू। संका। संखो। †

## न-सान्तप्रावृट्शरदः पुंसि ॥ १८ ॥

नकारान्ताः सकारान्ताश्च प्रावृट्शरदौ च पुंसि प्रयोक्तव्याः।

---

* मांसादिष्विति।—मांसादीनां विकल्पेनानुस्वारो भवति। तदिति।—तत् तस्मात्, अयं मांसादिर्गणः मांसादिव्यूहः, अपठितः गणत्वेन अपरिगृहीत इति यावत्। यत्रेति।—यत्र यस्मिन् स्थाने, क्वचित् कुत्रचित् प्रदेशे, वृत्तभङ्गभयात् छन्दोभङ्गशङ्कया, बिन्दुः त्यज्यमानो भवति त्यज्यते इत्यर्थः, क्रियमाणश्च भवति बिन्दुः क्रियत इत्यर्थः, स त्यक्तो विहितश्च बिन्दुः मांसादिषु गणेषु द्रष्टव्य इत्यर्थः।

† ययीति।—"अशर्हो यय्" इत्यनुशासनबलात् शर् श-ष-स-हकार इति वर्णचतुष्टयविरहिता ये व्यञ्जनवर्णास्ते यय्सञ्ज्ञका भवन्ति। तादृशे यय्सञ्ज्ञके वर्णे परवर्त्तिनि सति बिन्दुरनुस्वारः, तद्वर्गान्तः यद्वर्गीयवर्णे युक्तः तद्वर्गीयव्यञ्जनवर्णान्तो विकल्पेन भवतीत्यर्थः। सङ्केत्यादौ आदौ अनुस्वारः, पश्चात् कवर्गीयस्य पञ्चमवर्णो ङकारो जात इत्यर्थः। ययीति किमिति।—अंसो इत्यत्र शकारस्य यय्सञ्ज्ञकत्वाभावेन नैव तद्वर्गान्तो बिन्दुरिति तात्पर्य्यम्। वाधिकारादिति।—विकल्पाधिकारवशतः पंकमित्यादयः साधवः स्युरिति भावः।

‡ न-सान्तेति।—नकारान्तादयः क्लीबलिङ्गाः शब्दाः स्त्रीलिङ्गौ प्रावृट्शरदौ च

नान्ताः।—कम्मो। जम्मो। बम्मो। सान्ताः।—जसो। सरो। पाउसो। सरदो। * चति।

( कर्म्मन्। जन्मन्। वर्म्मन्। यशस्। तमस्। सरस्। प्रावृट्। शरद्।)

**न शिरोनभसी ॥ १९ ॥**

"शिरस्-नभस्" इत्येतौ न पुंसि प्रयोक्तव्यौ। सिर। णह। *

**पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ २० ॥ †**

एते स्त्रियां वा प्रयोक्तव्याः। पुट्ठी—पुट्ठं। अच्छी—अच्छं। पण्हा—पण्हो। ( पृष्ठम्। अक्षि। प्रश्नः।)

**ओदवापयोः ॥ २१ ॥**

"अव-अप" इत्येतयोरुपसर्गयोर्वा ओत्व भवति। ओहासो—अवहासो। ओसारिअं—अवसारिअं। ( अवहासः। अपसारितम्।)

---

पुलिङ्गवत कार्य्यमाप्नुवन्तीत्यर्थ। कम्मो इत्यादीना प्राक् "अन्त्यस्य हलः" (४।६) इत्यनेन अन्त्यवर्णस्य लोपः, पश्चात अनेन पुलिङ्गत्वम्। पाउसो इत्यत्र प्राक् "प्र" इत्यस्य रलोप, ततो वस्थाने उकार, तत "दिक्प्रावृषो स" (४।११) इत्यनेन प्रावृट्-शब्दस्य अन्तस्थितव्यञ्जनस्य सकार, पश्चादनेन पुलिङ्गता चेति। सरदो इति।—आदौ शस्थाने सकार, तत "शरदो दः" (४।१०) इत्यनेन अन्तस्थव्यञ्जनस्य दकार., पश्चादनेन सूत्रेण पुलिङ्गत्वमिति।

सिर णहमिति।—आदौ अन्तस्थितव्यञ्जनस्य लोप, तत. अनेन एतयो पुलिङ्गत्वनिषेध इति भाव.।

† सूत्रे वेति निर्देशात पृष्ठाक्षिशब्दयो स्त्रीत्व क्लीवत्वञ्च। प्रश्नशब्दस्य स्त्रीत्व पुंस्त्वञ्चेति।

## तल्त्वयोर्दात्तणौ ॥ २२ ॥

"तल्-त्व" इत्येतयोः प्रत्यययोर्यथासंख्यं "दा-त्तण" इत्येतावादेशौ स्तः । पीणदा । मूढदा । पीणत्तणं । मूढ़त्तणं । ( पीनता । मूढता । पीनत्वम् । मूढ़त्वम् । ) *

## त्व ऊण: ॥ २३ ॥

"क्त्वा" प्रत्ययस्य "ऊण" इत्ययमादेशो भवति । घेऊण । सोऊण । काऊण । दाऊण । ( गृहीत्वा । श्रुत्वा । कृत्वा । दत्त्वा । )

## तृण इरः शीले ॥ २४ ॥

शीले यस्तृण्प्रत्ययो विहितस्तस्य "इर" इत्ययमादेशो भवति । भमिरो (भ्रमणशीलः) । हसिरो (हसनशीलः) । ( भ्रमिता । हसिता । ) †

## आल्विल्लोल्लालवन्तेन्ता मतुपः ॥ २५ ॥

"आलु-इल्ल-उल्ल-आल-वन्त-इन्त" इत्येत आदेशा मतुपः स्थाने भवन्ति । आलुस्तावत् ।—ईसालू । णिद्दालू । इल्लः ।—विआरिल्लो । मालाइल्लो । उल्लः ।—विआरुल्लो । मालाउल्लो । आलः ।—धणालो । सद्दालो । वन्तः ।—धणवन्तो । जोव्वणवन्तो । इन्तः ।—रोसाइन्तो । पाणाइन्तो ।

यथादर्शनमिति प्रयोक्तव्याः, न सर्वे सर्वत्र ।

---

* यथासंख्यमित्यभिधानात् तल्प्रत्ययस्य "दा", त्वप्रत्ययस्य च "त्तण" इति ।

† शील इति निर्देशात् शीलार्थे विहिततृण्प्रत्ययस्यैवाय विधिः, नान्यार्थविहिततृण्प्रत्ययस्येति तात्पर्य्यमुन्नेयम ।

‡ यथादर्शनमिति ।—नाटक-नाटिका-त्रोटक-प्रकरणादिषु दर्शनानुसारेणैव एते आल्विल्लादयः प्रयोज्याः, न तु सर्वे प्रत्यया सर्वस्मिन्नेव स्थले इति तात्पर्य्यम् ।

( ईर्षावत्। निद्रावत्। विकारवत्। मालावत्। धनवत्। शब्दवत्। यौवनवत्। रोषवत्। प्राणवत्। )

क्वचिदा मतुपोऽन्त्यस्य मन्तो वा दृश्यते क्वचित्।

हणुमा। हणुमन्तो। (हनुमत्।)

इल्लोल्लावपरे प्रायः शैषिकेषु प्रयुज्यते॥

पौरस्त्यं पुरोभवं पुरिल्लं। आत्मीयं अप्पुल्लं।

परिमाणे किमादिभ्यो भवन्ति केद्दहादयः।

केद्दह—केत्तिअ। जेद्दह—जेत्तिअं। तेद्दह—तेत्तिअ। एद्दहं—एत्तिअं। ( कियत्। यावत्। तावत्। एतावत्। )

कृत्वसो हुत्तमित्यन्ये देशीशब्दः स इष्यते॥

सअहुत्त। सहस्सहुत्तं। ( शतकृत्वः। सहस्रकृत्वः। )

जातौ वा स्वार्थिकः कः।

जातौ स्वार्थे ककारः प्रयोक्तव्यः। ❁

---

एकत्र सर्वेषामाल्लादोना प्रयोगदर्शनाभावात यथादर्शनमित्युक्तमिति भाव। क्वचिदेति।—क्वचित् कुत्रचित् स्थले, मतुप मतुप्प्रत्ययस्य, अन्त्यस्य अन्तस्थितवर्णस्य, आ आकारागम स्यात। हणूमा इति तस्योदाहरणम। वा पक्षान्तरे, अथवेत्यर्थ, क्वचित कुत्रचित स्थले, मतुप्प्रत्ययस्य अन्तस्थस्य मन्तो दृश्यते विलोक्यत इत्यर्थ'। इल्लोल्लाविति।—शैषिकेषु तद्धितप्रत्ययेषु मध्ये, प्रायो बाहुल्येन, इल्लोल्लौ इल्लश्च उल्लश्चेति पृथकत्वेन प्रयुज्यते इत्यन्वय, अन्यथा क्रियापदेन सह इल्लोल्लावित्यस्य सम्बन्धो न घटते, तत्र प्रयुज्येते इत्येव क्रियापद स्यात, इत्यपरे अन्ये पण्डिता, आहुरिति शेष। परिमाण इति।—परिमाणे परिमाणार्थे, किमादिभ्य किम्-यत्-तदादिभ्य' शब्देभ्य उत्तरे, केद्दहादय केद्दह प्रभृतयो भवन्ति। आदिशब्दात केत्तिअमित्यादिक ग्राह्यमिति। कृत्वस इति।—कृत्वस कृत्वस्प्रत्ययस्य स्थाने, "हुत्त" भवतीति शेष, इत्यन्ये अपरे, कथयन्तीति क्रियाशेष, स देशीशब्द' ग्राम्यशब्द इष्यते पण्डितैरिति शेष। अत्र विधेयप्राधान्यात पुस्त्वमित्यनुसन्धेयम्। जाताविति।—जातिवाचकेभ्य शब्देभ्य' स्वार्थे कप्रत्ययो विकल्पेन भवतीत्यर्थः। उदाहरणन्तु सुगमम्।

## विद्युत्पीताभ्यां लः ॥ २६ ॥

विद्युत्पीतशब्दाभ्यां परतः स्वार्थे लप्रत्ययो भवति । बिज्जू । बिज्जुली । पीअं । पीअलं ।

## वृन्दे वो रः ॥ २७ ॥

वृन्दशब्दे वकारात् परः स्वार्थे रेफो वा प्रयोक्तव्यः । व्रदं । वंद । (वृन्दम् ।) *

## करेण्वां रणोः स्थितिपरिवृत्तिः ॥ २८ ॥

करेणुशब्दे रेफ-णकारयोः स्थितिपरिवृत्तिर्भवति । कणेरू । पुंसि न भवति । करेणू । †

## आलाने लनोः ॥ २९ ॥

आलानशब्दे लकार-नकारयोर्हल्मात्रयोः स्थितिपरिवृत्ति-र्भवति । आणालखंभो । ( आलानस्तम्भः । ) ‡

## बृहस्पतौ बहोर्भअौ ॥ ३० ॥

बृहस्पतिशब्दे बकार-हकारयोर्यथासंख्यं भकार-अकारौ भवतः । भअप्फई । §

---

* व्रदमिति ।—व्रदमिति स्वार्थोदाहरणं ज्ञेयम् ।

† स्थितीति ।—स्थितिपरिवृत्तिः स्थितेः स्वस्थानस्य, परिवृत्तिः परिवर्त्तन-मित्यर्थः । रकारस्य परिवर्त्तनं णकारे, तथा णकारस्य परिवर्त्तनञ्च रकारे, इति ज्ञेयम् । सूत्रे करेण्वामिति निर्देशात् स्त्रीलिङ्गान्तस्य करेणुशब्दस्यैवाय विधिः, न तु पुंलिङ्गान्तस्येति भावः । करेणू इति तस्यैवोदाहरणमिति ।

‡ आलानेति ।—आलानशब्दे हल्मात्रयोः केवलयोर्व्यञ्जनयोर्लकार-नकारयोः स्थानपरिवर्त्तनं, न तु व्यञ्जनद्वयस्थितयोः स्वरवर्णयोरिति तात्पर्य्यम् ।

§ बृहस्पतीति ।—बृहस्पतिशब्दे यथासंख्यमिति निर्देशात् बस्थाने भकारः, हस्थाने च अकारः स्यादिति । भकार-अकारौ इत्यत्र सन्धिविरहस्तु शिष्यबोधार्थेति बोध्यम् , भकाराकारौ इति तु समीचीन एव ।

## मलिने लिनोरिलौ वा ॥ ३१ ॥

मलिनशब्दे लिकार-नकारयोर्यथासंख्यमिकार-लकारौ वा भवतः। मइलं—मलिण। *

## गृहे घरोऽपतौ ॥ ३२ ॥

गृहशब्दे "घर" इत्ययमादेशो भवति। पतिशब्दे परतो न भवति। घर भवने। अपताविति किम्?—गहवई। (गृहपतिः)।

## दाढ़ादयो बहुलम् ॥ ३३ ॥

"दाढ़ा" इत्येवमादयः शब्दा बहुल निपात्यन्ते दंष्ट्रादिषु। दाढा (दंष्ट्रा)। एण्हिं (इदानीम्)। धीआ—धूदा (दुहिता)। चातुलिअं (चातुर्य्यम्)। मंडूरो (मण्डूकः)। घरे णिहितं (गृहे निहितम्)। कंदोट्टो (उत्पलम्)। गोला (गोदावरी)। णिडालं (ललाटम्)। भुमआ (भ्रूः)। वेलुरिअं (वैदूर्य्यम्)। अवहोवासं (उभयपार्श्वम्)। माइदो—माअंदो (चूतः)।

आदिशब्दोऽयं प्रकारे। तेन सर्वे एव देशसङ्केतप्रवृत्त-भाषाशब्दाः परिगृहीताः। †

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ सङ्कीर्णविधिर्नाम चतुर्थ परिच्छेद।

---

* मलिनेति।—अत्रापि यथासंख्यमिति निर्देशात लिस्थाने इकार., नस्थाने च लकार स्यादिति ज्ञेयम्।

† दाढेति।—दंष्ट्रादिषु शब्दादिषु दाढादिशब्दा बाहुल्येन निपातिता भवन्ति। बहुलग्रहणात् न सर्वत्रेति। आदीति।—सूत्रे आदिशब्दनिर्देश प्रकारार्थक, तेन दंष्ट्रादिप्रकाराः शब्दा निपात्यन्त इत्यर्थ, तेन हेतुना, सर्वे एव सकला एव, देशाना भिन्नदेशाना, सङ्केतै भिन्नसङ्केतै, प्रवृत्ता ये भाषाशब्दा तत्तद्देशीयाश्चलितकथा इत्यर्थः, परिगृहीता उपात्ता इति भाव।

# अथ पञ्चमः परिच्छेदः ।

## अत ओत् सोः ॥ १ ॥

अकारान्ताच्छब्दात् परस्य सोः स्थाने ओत्वं भवति । वच्छो । वसहो । पुरिसो । ( वृक्षः । वृषभः । पुरुषः । ) *

## जस्-शसोर्लोपः ॥ २ ॥

"अत" इत्यनुवर्त्तते । अकारान्तस्यानन्तरं यौ "जस्-शसौ" तयोर्लोपो भवति । वच्छा सोहंति । ( वृक्षाः शोभन्ते । ) "जस्-शस्-ङस्यां सु दीर्घः" (५।११) इति दीर्घे कृते पश्चाल्लोपो जसः । †
वच्छे णिअच्छह । (वृक्षान्नियच्छथ) । "ए च सुपि" (५।१२) इत्येत्वे कृते पश्चाल्लोपः शसः ।

## अतोऽमः ॥ ३ ॥

अकारान्तस्यानन्तर योऽम् द्वितीयैकवचनं तदकारस्य लोपो भवति । वच्छं पेक्खइ । ( वृक्षं प्रेक्षते । ) "मो बिन्दुः" (४।१२) इति बिन्दुः । ‡

---

* वच्छो इति ।—आदौ "ऋतोऽत्" (१।२७) इत्यनेन ऋस्थाने अकार, तत "क्षमा-वृक्ष-क्षणेषु वा" (३।३१) इत्यनेन क्षस्थाने छकार, पश्चात् अनेन सुस्थाने ओकार , पक्षे,—रुक्खो इति । वसहो इति ।—आदौ "वृ" इत्यस्य ऋकारस्य अकार, तत षस्थाने सकार, ततो भस्थाने हकार, ततोऽनेन सोः स्थाने ओकार । पुरिसो इति ।—आदौ "इत पुरुषे रो" (१।२३) इत्यनेन उकारस्य इकार, तत षस्थाने सकार, तत ओकार इति ।

† वच्छा सोहंतीति ।—आदौ जसि परे अकारस्य दीर्घ, पश्चाज्जसो लोप. ।

‡ वच्छ पेक्खईति ।—आदौ अकारान्तशब्दादम्, तत अमोऽकारस्य लोप, ततो म् इत्यस्य मकारस्य अनुस्वार इति ।

## टामोर्णः ॥ ४ ॥

अतोऽनन्तरं टामोस्तृतीयैकवचन-षष्ठीबहुवचनयोर्णकारो भवति। वच्छेण। वच्छाण। ( वृक्षेण। वृक्षाणाम्। ) "ए च सुपि" (५।१२) इत्येत्वम्। "जस्-शस्-ङस्यां सु दीर्घः" (५।११) इति दीर्घः। *

## भिसो हिं ॥ ५ ॥

अतोऽनन्तरस्य भिसो "हिं" भवति। वच्छेहिं। "ए च सुपि" (५।१२) इत्येत्वम्। (वृक्षैः)। †

## ङसेरा-दो-दु-हयः ॥ ६ ॥

अतोऽनन्तरस्य ङसेः पञ्चम्येकवचनस्य स्थाने "आ-दो-दु-हि" इत्येत आदेशा भवन्ति। वच्छा। वच्छादो। वच्छादु। वच्छाहि। (वृक्षात्)। "जस्-शस्-ङस्यां सु दीर्घः" (५।११) इति दीर्घत्वम्। ‡

## भ्यसो हिन्तो सुन्तो ॥ ७ ॥

अतोऽनन्तरस्य भ्यसो "हिन्तो-सुन्तो" इत्येतावादेशौ भवतः। वच्छाहिन्तो। वच्छासुन्तो। "ए च सुपि" (५।१२) इति चकारेण दीर्घत्वम्। (वृक्षेभ्यः)। §

---

* वच्छेण-वच्छाणेति।—आदौ टास्थाने णकार तत अकारस्य एकार। वच्छाणेत्यत्र आदौ आम स्थाने णकार, पश्चात "जस्‌शस्—" (५।११) इत्यादिना सूत्रेण अकारस्य दीर्घ इति।

† वच्छेहिमिति।—आदौ भिस स्थाने हि, पश्चात अस्थाने एकार इति।

‡ वच्छेति।—अकारान्तस्य शब्दस्य पञ्चम्येकवचने (अर्थात् ङसिस्थाने) 'आ-दो दु-हि" इत्येते चत्वार आदेशा भवन्ति। "दो दु-हि" इति त्रिषु प्रत्ययेषु परेषु "जस्-शस् ङस्या सु" (५।११) इत्यादिना सूत्रेण अकारस्य दीर्घत्वम्।

§ वच्छाहिन्तो-वच्छासुन्तो इति।—अत प्राक् भ्यस. स्थाने "हिन्तो-सुन्तो" इत्यादेशौ, पश्चात् सूत्रनिर्दिष्ट-चशब्दादकारस्य दीर्घत्वञ्च।

**स्सो ङसः ॥ ८ ॥**

अतोऽनन्तरस्य ङस. "स्स" इत्यादेशो भवति। वच्छस्स। (वृक्षस्य)।

**ङेरम्मी ॥ ९ ॥**

अतोऽनन्तरस्य ङेः "ए-म्मि" इत्यादेशौ भवतः। वच्छे। "क्वचित् ङसि-ङ्योर्लोपः" (५।१३) वच्छम्मि। (वृक्षे)। *

**सुपः सुः ॥ १० ॥**

अतोऽनन्तरस्य सुपः "सु" इत्यादेशो भवति। वच्छेसु। (वृक्षेषु)। "ए च सुपि" (५।१२) इत्येत्वम्। †

**जस्-शस्-ङस्यां सु दीर्घः ॥ ११ ॥**

जसादिषु परतोऽतो दीर्घो भवति। वच्छा सोहन्ति। "जस्-शसोर्लोपः" (५।२) इति जसो लोपः। वच्छादो आगदो। वच्छादु। वच्छाहि। "ङसेरा-दो-दु-हयः" (५।६) इति "दो-दु-हि" प्रत्ययाः। वच्छाण। (वृक्षाणाम्)। "टामोर्णः" (५।४) इति आमः स्थाने णः। ‡

**ए च सुप्यङि-ङसोः ॥ १२ ॥**

अतः अकारस्यैत्वं भवति सुपि परतो "ङि-ङसौ" वर्जयित्वा।

---

* वच्छम्मीति।—ङिस्थाने "ए-म्मि" इत्युभावादेशौ स्त। क्वचिल्लोपश्च भवति।

† वच्छेस्विति।—आदौ सुप. स्थाने "सु", पश्चात सुपि परे अकारस्य एकार इति।

‡ वच्छेति।—वृक्षा शोभन्ते। अत्र जसि अकारस्य दीर्घत्व, जसो लोपश्च। वच्छादो इति।—वृक्षात् आगत.। वच्छादु-वच्छाहि। वृक्षात। अत्र ङसिस्थाने "दो-दु-हि" इत्येते प्रत्यया भवन्ति, अतोऽनेन सूत्रेण दीर्घ। वच्छाणेति।—अत्र आम स्थाने ण, पश्चादनेन दीर्घ।

§ सुपीति।—सुपी मध्ये सर्वासा विभक्तीनामन्तर्निविष्टत्वेऽपि ङिविभक्ति ङस्-

चकाराद्दीर्घश्च। वच्छे पेक्खह। "जश्-शसोर्लोपः" (५।२) वच्छेण। (वृक्षेण)। "टामोर्णः" (५।४)। वच्छेहिं। वच्छेसु। चकाराद्दीर्घश्चेति। वच्छाहिन्तो—वच्छासुन्तो। "भ्यसो हिन्तो सुन्तो" (५।७) इति भ्यसो "हिन्तो-सुन्तो" प्रत्ययः। अङि-ङसोरिति किम्?—वच्छेम्मि। वच्छस्स। §

## क्वचिद् ङसि-ङ्योर्लोपः ॥ १३ ॥

अतो "ङसि-ङि" इत्येतयोः परतः क्वचिल्लोपो भवति। वच्छा आगदो (वृक्षात् आगतः)। "ङसेरा-दो-दु-हयः" (५।६) इति आत्वम्। वच्छे ठिअ (वृक्षे स्थितम्)। "ङेरेम्मौ" (५।९) इत्येत्वम्। *

## इदुतोः शसो णो ॥ १४ ॥

इदुदन्तयोः शसो "णो" भवति। अग्गिणो पेक्खह। वायुणो पेक्खह। ( अग्नीन् प्रेक्षस्व। वायून् प्रेक्षस्व। ) †

---

§ विभक्तिश्च विहाय अयं विधिरिति बोध्यम्। अनेन अकारस्य एकार। सूत्रे चशब्दनिर्देशाद् दीर्घश्च भवतीत्यर्थः। वच्छे पेक्खह। वृक्षान् प्रेक्षस्व। अत्र शसि अकारस्य एत्व, तत. शसो लोप। वच्छेणेति।—आदौ अस्थाने ए, ततष्टास्थाने णकार इति। वच्छेहि। वृक्षै.। वच्छेसु। वृक्षेषु। अत्र प्राक् अकारस्थाने एकार., ततो "भिसो हि" (५।५) इत्यनेन भिस स्थाने हि। "स्सो ङस" (५।८) इत्यनेन च "ङस." स्थाने स्सप्रत्यय। वच्छाहिन्तो-वच्छासुन्तो इति।—अत्र एकार वाधित्वा दीर्घ। "वच्छेम्मि" इत्यत्र सुपपरत्वेऽपि ङिपरतया अकारस्य न दीर्घत्व, प्रत्युत अकारस्य एकार एवेति। वच्छस्सेति।—अत्रापि ङस्परत्वात न अस्थाने एकार'।

* वच्छा आगदो वच्छे ठिअमिति।—इत्युभयत्र अकारस्य लोप, ततो लोपे सति उभयो पृथक् पृथक् सूत्रनिर्दिष्ट कार्य्यमिति।

† पेक्खहेति।—सकर्म्मकक्रियानिर्देशादत्र कर्म्मपदमिति भाव।

## ङसो वा ॥ १५ ॥

इदुदन्तयोर्ङसो वा "णो" भवति । अग्गिणो, अग्गिस्स । बाउणो, बाउस्स । ( अग्नेः । वायोः ) । *

## जसश्च ओ यूत्वम् ॥ १६ ॥

इदुदन्तयोर्जस ओकारादेशो भवति, इदुतोश्च ईऊत्वं वा । चकाराद् णो च । अग्गीओ, बाऊओ । अग्गिणो, बाउणो । (अग्नयः । वायवः ) ।

## टा णा ॥ १७ ॥

इदुदन्तयोष्टाविभक्तेः "णा" इत्ययमादेशो भवति । अग्गिणा । बाउणा । ( अग्निना । वायुना ) ।

## सु-भिस्-सुप्सु दीर्घः ॥ १८ ॥

इदुदन्तयोः "सु-भिस्-सुप्" इत्येतेषु दीर्घो भवति । सु ।—अग्गी । बाऊ । भिस् ।—अग्गीहिं । बाऊहिं । सुप् ।—अग्गीसु । बाऊसु । ( अग्निः । वायुः । अग्निभिः । वायुभिः । अग्निषु । वायुषु ) । †

## स्त्रियां शस उदोतौ ॥ १९ ॥

स्त्रियां वर्त्तमानस्य शस "उत्-ओत्" इत्येतावादेशौ भवतः । मालाउ—मालाओ । णईउ—णईओ । बहूउ—बहूओ । ( मालाः । नदीः । वधूः ) ।

---

* वेति ।—सूत्रे विकल्पनिर्देशात् पक्षे "ङस" स्थाने "स्स" । स्सेति न केवल-मकारान्तस्य, अपि तु इकारान्तोकारान्तयोश्चापि शब्दयोरिति तात्पर्य्यम् । एव भिस्यपि बोद्धव्यमिति ।

† अग्गीहिमिति ।—अत्रापि "भिस" स्थाने "हि", पश्चादनेन दीर्घ इति । पक्षे अदन्तवत कार्य्यमिति बोध्यम् ।

## जसो वा ॥ २० ॥

जसः स्त्रियाम् "उत्-ओत्" इत्येतावादेशौ वा भवतः। पक्षे अदन्तवत्। मालाउ। मालाओ। ( मालाः )। *

## अमि ह्रस्वः ॥ २१ ॥

अमि परत. स्त्रियां ह्रस्वो भवति। मालं। णइं। बहुं। ( मालाम्। नदीम्। वधूम् )।

## टा-ङस्-ङीनामिदेददातः ॥ २२ ॥

"टा-ङस् ङि" इत्येतेषां स्त्रियाम् "इत् एत्-अत्-आत्" इत्येत आदेशा भवन्ति। टा।—णईइ। णईए। णईअ। णईआ कअ। (नद्या कृतम्।) ङस्।—णईइ। णईए। णईअ। णईआ बणं। ( नद्या वनम्। ) ङि।—णईइ। णईए। णईअ। णईआ ठिअं। ( नद्यां स्थितम् )। †

## नातोऽदातौ ॥ २३ ॥

आत आकारान्तस्य स्त्रीलिङ्गस्यानन्तरं टा-ङस्-ङीनाम् "अत्-आत्" इत्येतावादेशौ न भवतः। पूर्वेण प्राप्तो निषिध्यते। मालाइ। मालाए। कअं। धणं। ठिअं। ( मालया कृतम्। मालाया धनम्। मालायां स्थितम् )। ‡

---

* जस इति।—जसो वेति विकल्पाभिधानात नदी-वधूप्रभृतीनामपि स्त्रीलिङ्गान्तानां शब्दानां "जस" स्थाने "उत्-ओत्" इत्येतावादेशौ वैकल्पिकौ ज्ञेयौ। तेन "णईउ" 'णईओ" "णई"। "बहूउ" "बहूओ" "बहू" इत्यादिकं सिद्धमेव। "पक्षे अदन्तवत्" इति ज्ञापनात पक्षे जसो लोप इति तात्पर्य्यम।

† टेति।—टेत्यादिषु तिसृषु विभक्तिषु इदादीनां चतुर्णामादेशानां मध्ये प्रयोगकर्त्ता स्वेच्छया यं कञ्चनादेशं प्रयुञ्जीतेति भाव। नाटकादिषु एतेषामुदाहरणानि वीक्ष्य स्थिरीकर्त्तव्यानीति ज्ञेयम्।

‡ पूर्वेणेति।—पूर्वेण पूर्वसूत्रेण, प्राप्तोविधिरादेशश्चतुष्टयरूप इति यावत्,

## आदीतौ बहुलम् ॥ २४ ॥

स्त्रियामाकारान्तादातः स्थाने "आत्-ईत्" इत्येतौ बहुलं प्रयोक्तव्यौ। सहमाणा—सहमाणी। हलद्दा—हलद्दी। सुप्पणहा—सुप्पणही। छाहा—छाही। (सहमाना। हरिद्रा। शूर्पणखा। छाया)। *

## न नपुंसके ॥ २५ ॥

प्रथमैकवचने नपुंसके दीर्घत्वं न भवति। सौ दीर्घः पूर्वस्येत्यनेन इदुदन्तयोः प्राप्त पूर्वस्य दीर्घत्व 'न नपुंसके' इत्यनेन बाध्यते। दहिं। महुं। हवि। (दधि। मधु। हविः)। †

## इज्जस्शसोर्दीर्घश्च ॥ २६ ॥

नपुंसके वर्त्तमानयोर्जस्शसोः स्थान इदादेशो भवति, पूर्वस्य च दीर्घः। वणाइ। दहीइ। महूइ। (वनानि। दधीनि। मधूनि)। ‡

## नामन्त्रणे सावोत्वदीर्घबिन्दवः ॥ २७ ॥

आमन्त्रणे गम्यमाने सौ परतः ओत्वदीर्घबिन्दवो न भवन्ति। "अत ओत् सोः" (५।१) इत्योत्वं प्राप्तम्। "सु-भिस्-सुप्सु

---

अनेन सूत्रेण निषिध्यते निवार्य्यत इत्यर्थ , तेन चतुर्णामादेशानां मध्ये अत्र द्वाविवादेशौ ग्राह्याविति निष्कर्ष । "टा" विभक्तिरूपवत् ङसि ङौ च तुल्यरूपावादेशाविति तात्पर्य्यं ज्ञेयम् ।

* "अत् पथि-हरिद्रा-पृथिवीषु" (१।१३) इत्यनेन हरिद्राशब्दस्य इस्थाने अकार, ततो रस्थाने ल, ततो "द्र" इत्यस्य रलोपः, ततो दकारस्य द्वित्व, पश्चादनेन ईच, तेन हलद्दीति। "छायाया ह" (२।१८) इत्यनेन यस्थाने हकार , तेनैव छाहेति।

† "सु-भिस्-सुप्सु दीर्घः" (५।१८) इत्यनेन सौ परत इकारान्तस्य उकारान्तस्य च दीर्घप्रसक्तिरासीत्,, अनेन तु स च दीर्घो निवारित इति तात्पर्य्यम् ।

‡ पूर्वस्य चेति ।—पूर्वस्य इकारादेशादव्यवहितपूर्ववर्त्तिन स्वरवर्णस्येत्यर्थ. ।

दीर्घः" (५।१८) इति दीर्घः प्राप्तः। "सोर्बिन्दुर्नपुंसके" (५।३०) इति बिन्दुः प्राप्तः। हे वच्छ। हे अग्गि। हे वाउ। हे वण। हे दहि। हे मह। ( हे वृक्ष। हे अग्ने। हे वायो। हे वन। हे दधे—दधि। हे मधो—मधु )। §

## स्त्रियामात एत् ॥ २८ ॥

स्त्रियामामन्त्रणे आतः स्थाने एत्वं भवति सौ परतः। हे माले। हे साले। (हे शाले)। "अन्त्यस्य हलः" (४।६) इति सोर्लोपः।

## ईदूतोर्ह्रस्वः ॥ २९ ॥

आमन्त्रणे ईदूतोर्ह्रस्वो भवति। हे णइ। हे वहु। ( हे नदि। हे वधु )।

## सोर्बिन्दुर्नपुंसके ॥ ३० ॥

नपुंसके वर्त्तमानस्य सोर्बिन्दुर्भवति। वणं। दहिं। महुं। ( वनम्। दधि। मधु )।

## ऋत आरः सुपि ॥ ३१ ॥

ऋकारान्तस्य सुपि परत "आर" इत्यादेशो भवति। भत्तारो सोहइ। (भर्त्ता शोभते)। भत्तार पेक्खसु। (भर्त्तार प्रेक्षस्व)। भत्तारेण कअं। (भर्त्रा कृतम्)।

---

§ हे वच्छेति।—अत्र सौ ओकारप्राप्तेर्बाध'। "हे अग्गि", "हे वाउ" इत्यत्र तु सौ परे दीर्घप्राप्तेर्बाध.। "हे वण" "हे दहि" हे मह" इत्यादिषु स्थलेषु च नपुंसके अनुस्वारप्राप्तेर्बाधो विज्ञापित, अतएवाय प्राप्तिसत्त्वे निषेध इति।

## मातुरात् ॥ ३२ ॥

मातृसम्बन्धिन ऋकारस्याकारो भवति । माआ सोहइ । (माता शोभते) । माअं पेक्खसु । (मातरं प्रेक्षस्व) । माआइ कअं । (मात्रा कृतम्) । माआए । (मातुः मातरि च) । *

## उ-जस्-शस्-टा-ङस्-सुप्सु वा ॥ ३३ ॥

जस्-शस्-टा-ङस्-सुप्सु परत ऋकारस्य स्थाने उकारादेशो भवति वा । जस् ।—भत्तुणो—भत्तारा । शस् ।—भत्तुणो—भत्तारे । टा ।—भत्तुणा—भत्तारेण । ङस् ।—भत्तुणो—भत्तारस्स । सुप् ।—भत्तुसु—भत्तारेसु । आरादिः पूर्ववत् । ( भर्त्तारः । भर्त्तॄन् । भर्त्रा । भर्त्तुः । भर्त्तृषु ) । †

## पितृ-भ्रातृ-जामातॄणामरः ॥ ३४ ॥

पित्रादीनां सुपि परतः ऋतोऽरो भवति । आरापवादः । पिअरं । पिअरेण । भाअरं । भाअरेण । जामाअरं । जामाअरेण । ( पितरम् । पित्रा । भ्रातरम् । भ्रात्रा । जामातरम् । जामात्रा ) । ‡

---

* "मातुरात" इत्यनेन मातृशब्दस्य विशेषविधि सूच्यते । "ऋत आर, सुपि" (५।३१) इत्यनेन प्राप्तम "आर" इति विधि वाधित्वाऽयमेव विधि प्रवर्त्तते । माअमिति ।—आदौ ऋस्थाने आ, तत "अमि ह्रस्व" (५।२१) इत्यनेन आकारस्य ह्रस्व इति वोध्यम् ।

† भत्तुणो इति ।—प्राक् जसि परे ऋस्थाने उकार, तत "इदुतो शसो णो" (५।१४) इत्यनेन उदन्ताना "णो" इत्यनुवृत्ते "जसश्च णो दृत्वम्" (५।१६) इत्यनेन जस्यपि णो । भत्तारा इति ।—आदौ ऋस्थाने आर, "जस्शस्—" (५।११) इत्यादिना सूत्रेण दीर्घ, पश्चात "जस्शसोर्लोप" (५।२) इत्यनेन जसो लोपश्चेति । इत्थ शस्-टा ङस्-सुपामपि यथायथ दत्तानामुदाहरणाना सूत्राण्यनुसन्धाय द्रष्टव्यानीति ।

‡ आरापवाद इति ।—"ऋत आर सुपि" (५।३१) इत्यस्य सूत्रस्य आरविधि वाधित्वा पित्रादीनामरादेशो भवतीति तात्पर्य्यम् ।

## आ च सौ ॥ ३५ ॥

पित्रादीनामाकारो भवति सौ परतः। चकारादरश्च पिआ—पिअरो। (पिता)। भाआ—भाअरो। (भ्राता)। जामाआ—जामाअरो। (जामाता)। *

## राज्ञश्च ॥ ३६ ॥

राजन्शब्दस्य "आ" इत्ययमादेशो भवति सौ परतः। राआ। (राजा)।

## आमन्त्रणे वा बिन्दुः ॥ ३७ ॥

राजन्शब्दस्य आमन्त्रणे वा बिन्दुः स्यात्। हे राअं। हे राअ। (हे राजन्)। †

## जस्-शस्-ङसां णो ॥ ३८ ॥

राज्ञ उत्तरेषां "जस्-शस्-ङस्" इत्येतेषां "णो" इत्ययमादेशो भवति। राआणो पेक्खन्ति। (राजानः प्रेक्षन्ते)। राआणो पेक्ख। (राज्ञः प्रेक्षस्व)। राइणो धणं—रण्णो धणं। (राज्ञो धनम्)। ‡

## शस एत् ॥ ३९ ॥

राज्ञः परस्य शस "ए" इत्ययमादेशो भवति। राए पेक्ख। राआणो पेक्ख। ( राज्ञः प्रेक्षस्व )।

---

* आ चेति।—सुपि पित्रादीनामरादेशप्राप्तावपि "सु" विभक्तौ तु केवलमाकार एवेति विशेष। पुनश्च सूत्रे चकारनिर्देशादरश्च स्यादिति।

† आमन्त्रण इति।—आमन्त्रणे सम्बुद्धावित्यर्थ।

‡ रण्णो धणमिति।—ङसि एकत्र णो, अन्यत्र णकारस्य द्वित्वम्, अन्तस्थित-वर्णस्य च लोपश्चेति।

**आमो णं ॥ ४० ॥**

राज्ञ उत्तरस्यामः षष्ठीबहुवचनस्य "णं" इत्ययमादेशो भवति। राआणं। (राज्ञाम्)।

**टा णा ॥ ४१ ॥**

राज्ञ उत्तरस्या. टाविभक्तेः "णा" इत्ययमादेशः स्यात्। राइणा। (राज्ञा)।

**ङसश्च ह्वित्वं वाऽन्त्यलोपश्च ॥ ४२ ॥**

राज्ञ उत्तरस्य ङसादेशस्य टादेशस्य च वा विकल्पेन द्वित्वं भवति। अन्त्यस्य च लोपः। रण्णो—राइणो धणं। (राज्ञो धनम्)। राइणा—रण्णा कअं। (राज्ञा कृतम्)। *

**इर्द्वित्वे ॥ ४३ ॥**

वेति निवृत्तम्। ङसादेशस्य टादेशस्य च अकृते द्वित्वे राज्ञ इत्वं भवति। राइणो। (राज्ञः)। राइणा। (राज्ञा)। कृते द्वित्वे त्वित्वं न भवति। रण्णो। (राज्ञः)। रण्णा। (राज्ञा)। †

**आ णोणमोरङसि ॥ ४४ ॥**

णोणमोः परयोः राज्ञो जकारस्य आकारादेशः स्यात्।

---

* अन्त्यस्य चेति।—द्वित्वपक्षे अन्तस्थितवर्णस्य आकारस्य लोप इति। द्वित्वाभावपक्षे तु "आ" तिष्ठत्येवेति भाव।

† वेति।—पूर्वसूत्रानुवृत्तस्य विकल्पस्य निवृत्तिरिति। अद्वित्वे द्वित्वाभावपक्षे राजन्शब्दस्य इत्वम्, तेन राइणा-राइणोति। द्वित्वे पुन कृते सति, यस्मिन् पक्षे द्वित्व स्यात्, तस्मिन् पक्षे तु इकारो न भवतीत्यर्थ। अत्र पक्षे शेषवर्णस्य लोपस्तेन रण्णो रण्णेति सिद्धमित्याशय।

‡ आ णोणमोरिति।—"णो-णम्" इत्यादेशयो परयो सर्वत्रैव राजन्-शब्दस्य

अङसि षष्ठेएकवचने न भवति। राआणो पेक्खंति। (राजानः प्रेक्षन्ते)। राआणो पेक्ख। (राज्ञः प्रेक्षस्व)। राआणं धणं। (राज्ञां धनम्)। अङसीति किम्?—राइणो—रस्रो धण (राज्ञो धनम्)। शेषमदन्तवत्। राअं। (राजानम्)। राएहिं। (राजभिः)। राआ—राआदो—राआदु। (राज्ञः)। राआ-हिन्तो—राआसुन्तो। (राजभ्यः)। राअम्मि—राए। (राज्ञि)। राएसु। (राजसु)। ※

## आत्मनोऽप्पाणो वा ॥ ४५ ॥

आत्मनोऽप्पाण इत्यादेशो भवति वा। अप्पा—अप्पाणो। (आत्मा)।

## इत्वद्वित्ववर्ज्जं राजवदनादेशे ॥ ४६ ॥

आत्मनोऽनादेशे राजवत् कार्य्यं स्यादित्वद्वित्वे वर्जयित्वा। अप्पा। (आत्मा)। अप्पाणो। (आत्मानः)। अप्पणा। (आत्मना)। अप्पणो। (आत्मनः)। *

## ब्रह्माद्या आत्मवत् ॥ ४७ ॥

ब्रह्माद्याः शब्दा लक्ष्यानुसारेणात्मवत् साधवो भवन्ति। बम्हा। (ब्रह्मा)। बम्हाणो। (ब्रह्माणः)। जुबा। (युवा)।

---

जकारस्थाने आकार, केवल षष्ठीविभक्त्येकवचन वर्जयित्वेत्यर्थ। शेषमिति।—अवशिष्टासु विभक्तिषु अकारान्तहचशब्दवत कार्य्यं ज्ञेयमिति भाव।

* आत्मन इति।—अनादेशे न आदेश अनादेशस्तस्मिन्, आदेशभिन्नस्थले इत्यर्थ', इत्वद्वित्वे वर्जयित्वा इत्व द्वित्वञ्च विनेत्यर्थ, आत्मन्शब्दस्य राजन्-शब्दवत् कार्य्यं भवतीत्यर्थ। राजन्शब्दस्य यथा इत्व द्वित्वञ्च स्यात, अस्य तु न तथेति तात्पर्य्यम्।

जुवाणो । (युवानः) । अद्वा । (अध्वा) । अद्वाणो । (अध्वानः) । "ब्रह्मन्-युवन्-अध्वन्" एवमादयो लक्ष्यानुसारेणानुगन्तव्याः । †

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ लिङ्गविभक्त्यादेशो नाम पञ्चम. परिच्छेद ।

---

## अथ षष्ठः परिच्छेदः ।

### सर्वादेर्जस एत्वम् ॥ १ ॥

सर्वादेरुत्तरस्य जस एत्व भवति । सव्वे । जे । ते । के । कदरे । ( सर्वे । ये । ते । के । कतरे ) । *

### ङेः स्सिं-म्मि-त्थाः ॥ २ ॥

ङेः सप्तम्येकवचनस्य सर्वादिपरस्थितस्य स्थाने "स्सिं-म्मि-त्थ" इत्येत आदेशा भवन्ति । सव्वस्सिं । सव्वम्मि । सव्वत्थ । (सर्वस्मिन्) । इअरस्सिं । इअरम्मि । इअरत्थ । (इतरस्मिन्) । †

---

† लक्ष्येति ।—लक्ष्यानुसारेण लक्ष्यमनुसृत्येत्यर्थ । साधवी निर्दोषा व्युत्पादिता इत्यर्थः । एवमादय इति ।—एवमादय एव प्रकारा शब्दा इत्यर्थ. । अनुगन्तव्या अवगन्तव्या, बोद्धव्या इति मन्तव्यम् ।

---

* अस्मिन् परिच्छेदे सर्वनामाधिकार इति बोध्यम्, तेनैव सर्वनामवाचकाना शब्दाना जस स्थाने एकार इति । कदर इति ।— 'डतर-डतम'-प्रत्ययान्तानामपि सर्वनामत्वमिति भाव. ।

† सर्वनामवाचकाना शब्दाना ङिविभक्तौ ये त्रय आदेशा भवन्ति, ते तु नाटकादौ द्रष्टव्याः ।

## इदमेतत्-किं-यत्तद्भ्यष्टा इणा वा ॥ ३ ॥

"इदम्-एतत्-किम्-यत्-तत्" इत्येतेभ्यः "टा" इत्यस्य इणादेशो भवति वा। इमिणा। इदिणा। किणा। जिणा। तिणा। पक्षे—इमेण। एदेण। केण। जेण। तेण।

( अनेन। एतेन। केन। येन। तेन। ) *

## आम एसिं ॥ ४ ॥

इदमादिभ्य उत्तरस्य आम "एसिं" इत्ययमादेशो वा भवति। इमेसि—इमाण। (एषाम्)। एदेसि—एदाण। (एतेषाम्)। केसि—काण। (केषाम्)। जेसि—जाण। (येषाम)। तेसिं—ताण। (तेषाम्)। †

## किं-यत्तद्भ्यो ङस आसः ॥ ५ ॥

"किम्-यत्-तत्" एभ्य उत्तरस्य ङस "आसः" इत्ययमादेशो भवति वा। कास—कस्स। जास—जस्स। तास—तस्स। ( कस्य। यस्य। तस्य )। ‡

---

* इदमादिभ्य एकत्र "इणा", वैकल्पिकत्वादन्यत्र "टा णा" (५।१७) इत्यनेन "णा" प्रत्यय, पश्चात सर्वनामकार्य्याणि च यथायथ ज्ञेयानीति तात्पर्य्यम्।

† आम इति।—इदम्प्रभृतिभ्य पञ्चशब्देभ्य उत्तरे आम्विभक्तिस्थाने विकल्पेन "एसि"-प्रत्यय स्यात। पक्षे अदन्तशब्दवत् "टामोर्ण" (५।४) इत्यनेन आमि "ण"-प्रत्यय एव स्यादिति ज्ञेयम्।

‡ कासेति।—कि-यत्तदामिति त्रयाणा सर्वनामवाचकाना शब्दाना ङस् विभक्तिस्थाने विकल्पेन आसादेशो भवति, पक्षे अदन्तवद्रूपम्। अत "स्सो ङस" (५।८) इत्यनेन सूत्रेण ङस स्थाने "स्स", तेन कस्सेति। एवं "जस्स-तस्स" इत्यनयोरपि ज्ञेयम्।

## इद्भ्यः स्सा से ॥ ६ ॥

इकारान्तेभ्यः किमादिभ्य उत्तरस्य ङसः "स्सा-से" इत्येतावादेशौ भवतः। किस्सा। कीसे। कीआ। कीए। कीअ। कीइ। (कस्य)। जिस्सा। जीसे। जीआ। जीए। जीअ। जीइ। (यस्य)। तिस्सा। तीसे। तीआ। तीए। तीअ। तीइ। (तस्य)। *

## ङेर्हिं ॥ ७ ॥

किमादिभ्य उत्तरस्य ङे "हि" इत्ययमादेशो भवति वा। कहिं। कस्सिं। कम्मि। कत्थ। (कस्मिन्)। जहि। जस्सिं। जम्मि। जत्थ। (यस्मिन्)। तहि। तस्सि। तम्मि। तत्थ। (तस्मिन्)। †

## आहे इआ काले ॥ ८ ॥

कि-यत्तद्भ्यो ङे काले "आहे-इआ" इत्यादेशौ वा भवतः। काहे। जाहे। ताहे। कइआ। जइआ। तइआ। "कहि" इत्यादयोऽपि। (कदा। यदा। तदा)। ‡

---

* इद्भ्य इति।—इकारान्तेभ्य किमादिभ्यस्त्रिभ्य उत्तरे ङसविभक्तिस्थाने "स्सा-से" इमौ आदेशौ भवत। किस्सा-कीसे इति।—पक्षे,—"टा-ङस्-ङीनामिदेददात" (५।२२) इत्यनेन "इत् एत-अत-आत्" इत्यादेशचतुष्टय स्यादिति, तेन "कीआ" "कीए" "कीअ" "कीइ" इति चत्वारि रूपाणीति।

† किमादिभ्य इति।—"कि-यत्-तत्" इत्येनेभ्य उत्तरे ङिविभक्तिस्थाने "हि" इत्यादेशो भवति। पक्षे,—"ङे स्सि म्मि-त्था" (६।२) इत्यनेन सूत्रेण त्रय आदेशा भवन्ति।

‡ आहे इत्यादि।—काले कालार्थे, किमादिभ्य उत्तरे ङिस्थाने "आहे"-"इआ" इति द्वावादेशौ भवत। पक्षे,—"कहि-जहि-तहिं" चेति।

## त्तो दो ङसेः ॥ ९ ॥

किं-यत्तद्भ्यो ङसेः "त्तो-दो" इत्येतावादेशौ भवतः। कत्तो—कदो। (कस्मात्)। जत्तो—जदो। (यस्मात्)। तत्तो—तदो। (तस्मात्)।

## तद ओश्च ॥ १० ॥

तद उत्तरस्य ङसेरोकारादेशो भवति वा। तो—तत्तो—तदो। (तस्मात्)। *

## ङसा से ॥ ११ ॥

वेति वर्त्तते। तदो ङसा सह "से" इत्ययमादेशो भवति। पक्षे—यथाप्राप्तम्। से—तास—तस्स। (तस्य)। †

## आमा सिं ॥ १२ ॥

तद आमा सह "सिं" इत्ययमादेशो वा भवति। सिं—ताण। (तेषाम्, तासाम्)। ‡

## किमः कः ॥ १३ ॥ §

किंशब्दस्य सुपि परतः "कः" इत्ययमादेशो भवति। को। के। केण। केहि। ( कः। के। केन। कैः )।

---

* तद इति।—सूत्रे चशब्दनिर्देशात पक्षे पूर्वसूत्रानुवृत्तौ "त्तो-दो" इत्युभावादेशौ ग्राह्याविति तात्पर्य्यम्।

† पक्ष इति।—अत्र विकल्पानुवृत्तिर्ग्राह्येति। पक्षे यथाप्राप्तमिति।—"ङसः स्सा से" (६।६) इत्यस्य सूत्रस्यैव कार्य्यमनुवर्त्तनीयमिति भाव।

‡ तद इति।—आम्विभक्त्या सह तद्-शब्दस्थाने सिमिति। पक्षे,—"टामोर्ण" (५।४) इत्यनेन णप्रत्यय।

§ किम क इति।—पाणिनीयादिव्याकरणेऽपि संस्कृतपदसाधनसूत्रमपि "किम कः" (७।२।१०३) इति तुल्यरूपं दृश्यते।

## इदम इमः ॥ १४ ॥

सुपि परत इदम "इम" इत्ययमादेशो भवति। इमो। इमे। इमं। इमेण। इमेहि। (अयम्। इमे। इमम्। अनेन। एभिः)। *

## स्स-स्सिमोरद् वा ॥ १५ ॥

"स्स-स्सिमो'" परत इदमोऽदादेशो वा भवति। अस्स—इमस्स। (अस्य)। अस्सिं—इमस्सिं। (अस्मिन्)।

## ङेर्दैन हः ॥ १६ ॥

इदमो दकारेण सह ङेः स्थाने हकारादेशो वा भवति। इह। पक्षे,—अस्सि—इमस्सि—इमम्मि। (अस्मिन्)। †

## न त्थः ॥ १७ ॥ ‡

इदमः परस्य ङे' "त्थ" इत्ययमादेशो न भवति। "ङेः स्सिं-म्मि त्थाः" (६।२) इति प्राप्ते प्रतिषिध्यते। इह। अस्सिं—इमस्सि—इमम्मि। (अस्मिन्)।

## नपुंसके स्वमोरिदमिणमिणमो ॥ १८ ॥

नपुंसकलिङ्गे इदमः स्वमोः परतः सविभक्तिकस्य "इद-

---

* इममिति।—इमे-इममिति संस्कृतप्राकृतयोस्तुल्यरूप दृश्यते। अन्यत्र अदन्तशब्दवत् पूर्वोदाहृतं कार्य्यं विज्ञेयमिति।

† इदम इति।—आदाविदम्शब्दस्य दकारेण सह ङिस्थाने हकारादेशो भवति, तेन इहेति। पक्षे,—"स्सि-म्मि" इत्येतावादेशौ भवत।

‡ न त्थ इति।—"ङे स्सिम्" (६।२) इत्यादिना सूत्रेण इदम्शब्दस्य ङिस्थाने प्राप्तेऽपि त्थादेशे अनेन सूत्रेण निषेध'। तदर्थमवास्य सूत्रस्योपक्रम इति ज्ञेयम्।

§ नपुंसकेति।—क्लीवलिङ्गे इदम्शब्दस्य "सु"-विभक्तौ "अम्"-विभक्तौ च उक्त-

इणं-इणमो” इत्येते त्रय आदेशा भवन्ति। इदं—इणं—इणमो धणं। (इदं धनम्)। §

## एतदः सावोत्वं वा ॥ १९ ॥

एतच्छब्दस्य सौ परतः ओत्वं वा भवति। नित्ये प्राप्ते विकल्पयते। एस—एसो। (एष.)। *

## त्तो ङसेः ॥ २० ॥

एतदः परस्य ङसे. “त्तो” इत्ययमादेशो भवति। एत्तो—एदादो—एदादु—एदाहि। ( एतस्मात् )। †

## त्तो-त्थयोस्तल्लोपः ॥ २१ ॥

एतदस्तकारस्य त्तो-त्थयो' परतो लोपो भवति। एत्तो ( एतस्मात् )। एत्थ। ( एतस्मिन् )। ‡

## तदेतदोः सः सावनपुंसके ॥ २२ ॥

तच्छब्दस्य एतच्छब्दस्य च यस्तकार तस्य सकारादेशो भवति अनपुंसके सौ परत.। सो पुरिसो। सा महिला। एस—एसो। एसा। साविति किम् ?—एदे। ते। एदं। तं। अन-

---

विभक्तिद्वयेन सहैव “इदम्-इणम्-इणमो” इत्येते त्रय आदेशा भवन्ति। इदमादीनि त्रीणि रूपाणि सौ अमि च भवन्तीति बोध्यम्।

* नित्य इति।—ओत्वस्य नित्यप्राप्तौ अनेन सूत्रेण वैकल्पिकत्वम् व्यवस्थापितम्। “तदेतदो स” (६।२२) इत्यादिना एतच्छब्दस्य तकारस्थाने सकार।

† एतद इति।—आदावनेन सूत्रेण “त्तो” इत्यादेश, पश्चात “ङसेरा दो-दु हय” (५।६) इत्यनेन “दो-दु-हि” इत्येते आदेशा' स्युरिति, तत' सुपि दीर्घत्वञ्चेति।

‡ एतद इति।—प्राक् अन्तस्थितव्यञ्जनस्य लोप', तत “त्तो-त्थ” इत्येतयो परयोस्तकारस्य लोपः, तेन “एत्तो-एत्थ” इति पदद्वय ज्ञेयम्।

§ तदिति।—अनपुसके नपुसकभिन्ने, पुलिङ्गे स्त्रीलिङ्गे चेत्यर्थ, सौ परे

पुंसक इति किम्?—तम्, एदं धणं। (स पुरुषः। सा महिला। एषः। एषा। एते—ते। एतम्—तम्। तत्, एतत् धनम्)। §

## अदसो दो मुः॥ २३॥

अदसो दकारस्य सुपि परतो "मु" इत्ययमादेशो भवति। अमू पुरिसो। (असौ पुरुषः)। अमू महिला। (असौ महिला)। अमूओ पुरिसा। (अमी पुरुषाः)। अमूओ महिलाओ। (अमूः महिलाः)। अमुं वणं। (अदो वनम्)। अमूइ वणाइं। (अमूनि वनानि)। *

## हश्च सौ॥ २४॥

अदसो दकारस्य सौ परतो हकारादेशो भवति। अह पुरिसो। (असौ पुरुषः)। अह महिला। (असौ महिला)। अह वण। (अदो वनम्)। हादेशोऽयमोत्वात्वबिन्दून् त्रिष्वपि लिङ्गेषु परत्वाद् बाधते। †

## पदस्य॥ २५॥

अधिकारोऽयम्। आ शब्दविधानाद्, यदित ऊर्द्ध्वमनु-

---

तदेतदोस्तकारस्य सकारादेश इति। "एदे-ते" इति पुलिङ्गबहुवचने। "एद-त" इति पुलिङ्गद्वितीयैकवचने। त एदं धणमिति क्लीवलिङ्गप्रथमैकवचने ज्ञेयमिति।

* अदस इति।—आदावन्त्यव्यञ्जनस्य लोपः, ततो दकारस्य सुपि परे "मु" इत्यादेशः, तत इदुदन्तशब्दप्रकरणोक्तविधिना दीर्घत्वादिकं कार्य्यं बोध्यम्।

† हश्चेति।—सूत्रे लिङ्गनिर्देशवर्जं "सु"-विभक्तौ परतो हकारादेशविधानात पुलिङ्गे ओकारः, स्त्रीलिङ्गे आकारः, क्लीवलिङ्गे चानुस्वारो न प्रसज्येतेत्याशङ्क्य समाधत्ते "हादेश इति"।—त्रिष्वपि लिङ्गेष्वेव अस्य विधेर्वर्त्तमानतया अयं हकारादेशः "ओत्वम्-आत्वम्-अनुस्वारञ्च" बाधत इति तात्पर्य्यम्। हकारादेशे कृते त्रिलिङ्गानामेव ओत्वादीनां प्रतिषेध इति निष्कर्षः।

‡ अधिकार इति।—शब्दविधानपर्य्यन्तमेव पदसञ्ज्ञाऽधिकार इति। तेन इत

क्रमिष्यामः पदस्य तद् भवतीत्येवं वेदितव्यम्। तच्च तत्रैवो-दाहरिष्यामः। ꣸

## युष्मदस्तं तुमं ॥ २६ ॥

सावित्येव। युष्मदः पदस्य सौ परतः "तं-तुमम्" इत्येतावादेशौ भवतः। तं आगदो, तुमं आगदो। ( त्वमागतः )। *

## तुं चामि ॥ २७ ॥

युष्मदः पदस्य अमि परतः "तुं" इत्यादेशो वा भवति। तुम च। तुं पेक्खामि, तुम पेक्खामि। ( त्वां प्रेक्षे )। †

## तुज्झे तुम्हे जसि ॥ २८ ॥

युष्मदः पदस्य जसि परतः "तुज्झे-तुम्हे" इत्येतावादेशौ भवतः। तुज्झे आगदा, तुम्हे आगदा। ( यूयमागताः )।

## वो च शसि ॥ २९ ॥

शसि युष्मदः पदस्य "वो" इत्यादेशो भवति। चकारात् "तुज्झे-तुम्हे" च। वो पेक्खामि। तुज्झे, तुम्हे पेक्खामि। ( युष्मान् प्रेक्षे )।

---

परं यद् वक्ष्यामस्तत् पदस्यैव भवतीति ज्ञेयम्। तच्च कार्य्यं, तत्रैव तस्मिन् तस्मिन् स्थल एव, उदाहरिष्याम उदाहृत्य दर्शयिष्याम इति भावः। शब्दविधानात् प्रागेव पदविधानमिति फलितार्थः।

* सावित्येवेति।—युष्मदिति पदस्य स्थाने "सु" विभक्तौ परतः "तं तुमम्" इत्यादेशद्वयं भवतीति।

† तुं चामीति।—सूत्रे चकारनिर्देशात् अमि पूर्वसूत्रविहित-"तुम" "तुं" च इत्येतावादेशौ भवतः, तेन वृत्तिकारेण वृत्तौ वेति गृहीतमुक्तार्थस्पष्टीकरणार्थमिति भावः।

### टाङ्योस्तइ-तए-तुमए-तुमे ॥ ३० ॥

युष्मदुत्तरयोः "टा-ङि" इत्येतयोः "तइ-तए-तुमए-तुमे" इत्येत आदेशा भवन्ति। टा।—तइ—तए—तुमए—तुमे कअं। (त्वया कृतम्)। ङि।—तइ—तए—तुमए—तुमे ठिअं। (त्वयि स्थितम्)। *

### ङसि तुमो-तुह-तुज्झ-तुम्ह-तुम्मः ॥३१॥

युष्मदः पदस्य ङसि "तुमो-तुह-तुज्झ-तुम्ह-तुम्म" इत्येत आदेशा भवन्ति। तुमो पदं। (तव पदम्)। तुह—तुज्झ—तुम्ह—तुम्म पढं। (तव पदम्)। †

### आङि च ते-दे ॥ ३२ ॥

आङि तृतीयैकवचने चकारात् ङसि च परतो युष्मदः पदस्य "ते-दे" इत्येतावादेशौ भवतः। ते कअं—दे कअ। (त्वया कृतम्)। ते धणं—दे धणं। (तव धनम्)। ‡

### तुमाइ च ॥ ३३ ॥

आङि युष्मदः पदस्य "तुमाइ" इत्येवमादेशो भवति। तुमाइ कअ। (त्वया कृतम्)।

---

* टेति।—तृतीयैकवचने सप्तम्येकवचने च युष्मच्छब्दादुत्तरे तइत्यादयश्चत्वार आदेशा भवन्ति।

† ङसीति।—"तुज्झ ण आणे हिअअं मम उण मअणो दिवा वि रत्तिं वि" इति शकुन्तला।

‡ आङीति।—आङिति "टा"-निर्देशः, तेन प्राचीनकृता तृतीयैकवचन इति व्याख्यातम्। तथा च सूत्रनिर्दिष्ट-"च"-शब्देन पूर्वसूत्रोक्तङस् ग्राह्य इति बोध्यम्।

§ तुमाइ चेति।—सूत्रे चकारनिर्देशात् पूर्वसूत्रानुवृत्तस्य युष्मदः पदस्य तृतीयैकवचने "तुमाइ" इत्येवरूप आदेशो भवतीति बोध्यम्।

## तुज्झेहिं-तुम्हेहिं भिसि ॥ ३४ ॥

भिसि परतो युष्मदः पदस्य "तुज्झेहिं-तुम्हेहिं-तुम्मेहिं" इत्येत आदेशा भवन्ति । तुज्झेहिं—तुम्हेहिं—तुम्मेहिं कअं । ( युष्माभिः कृतम् ) । *

## ङसौ तत्तो-तइत्तो-तुमादो-तुमादु-तुमाहि ॥ ३५ ॥

ङसौ परतो युष्मदः पदस्य "तत्तो-तइत्तो-तुमादो-तुमादु-तुमाहि" इत्येत आदेशा भवन्ति । तत्तो आगदो । (त्वदागतः) । तइत्तो—तुमादो—तुमादु—तुमाहि आगदो । (त्वदागतः) । †

## तुम्हाहिंतो तुम्हासुंतो भ्यसि ॥ ३६ ॥

युष्मदः पदस्य पञ्चमीबहुवचने भ्यसि "तुम्हाहिंतो-तुम्हासुंतो" इत्येतावादेशौ भवतः । तुम्हाहिंतो तुम्हासुंतो आगदो । ( युष्मदागतः ) । ‡

## वो-भे-तुज्झाणं-तुम्हाणमामि ॥ ३७ ॥ §

आमि परतो युष्मदः पदस्य "वो-भे-तुज्झाणं-तुम्हाणं" इत्येत

---

* तुज्झेहिमित्यादि ।—एतेषां यथायथमुदाहरणानि नाटकादौ द्रष्टव्यानीति ।

† ङसाविति ।—ङसिविभक्तौ "तत्तो" इत्यादयः ये पञ्चादेशा भवन्ति, एतेषां पदानामुदाहरणानि तु नाटकादौ द्रष्टव्यानीति ।

‡ तुम्हाहिंतो इति ।—सूत्रेऽस्मिन् "भ्यसि" इति सामान्येन निर्देशात् चतुर्थी-पञ्चम्योरुभयोरेव प्राप्तौ तत्सन्देहनिरसनाय वृत्तौ "युष्मदः पदस्य पञ्चमीबहुवचने भ्यसि" इति स्पष्टतया निर्देशः कृतः, प्राकृते चतुर्थीविभक्तिस्थाने षष्ठ्या एव प्रयोगविधानात् इति बोध्यम् ।

§ अस्मिन् सूत्रे "भे" इत्यत्र पुस्तकान्तरे "मे" इति पाठो दृश्यते । एतयो-र्मीमांसामादर्शपुस्तकत्वात् कामदोग्धृसूत्रे च "भे" इत्यस्य "म" इत्यस्य च द्वयोरेवा-भावात् विशिष्टप्रमाणादर्शनेन "भे" इत्येव समीचीनं मन्ये । अपथनिर्णयेऽस्मिन् औदासीन्यमेव हि प्रामाणिकानामिति ।

आदेशा भवन्ति। वो धण—भे धण। तुज्झाण—तुम्हाणं धण। ( युष्माक धनम् )।

## ङौ तुमम्मि ॥ ३८ ॥

युष्मदः पदस्य ङौ परतः "तुमम्मि" इत्यादेशो भवति। तुमम्मि ठिअं। ( त्वयि स्थितम् )। पूर्वोक्ताश्च तइप्रभृतयश्चत्वारोऽप्यादेशा भवन्ति। *

## तुज्झेसु-तुम्मेसु सुपि ॥ ३९ ॥

युष्मदः पदस्य सप्तमीबहुवचने "तुज्झेसु-तुम्मेसु" इत्येतावादेशौ भवतः। तुज्झेसु ठिअं। ( युष्मासु स्थितम् )। तुम्मेसु ठिअं। ( युष्मासु स्थितम् )।

## अस्मदो हमहमहअं सौ ॥ ४० ॥

अस्मदः पदस्य सौ परतो "हं-अहं-अहअ" इत्येत आदेशा भवन्ति। हं—अहं—अहअ करेमि। ( अह करोमि )। †

## अहम्मिरमि च ॥ ४१ ॥

अमि परतोऽस्मदः पदस्य "अहम्मि" इत्ययमादेशो भवति। सौ च। अहम्मि पेक्ख। ( मां प्रेक्षस्व )। अहम्मि करेमि। ( अहं करोमि )। ‡

---

* पूर्वोक्ताश्चेति।—पूर्वोक्ता "टाङ्योस्तइ तए-तुमए-तुमे" (६।३०) इत्यनेन सूत्रेण कथिताश्चत्वारश्चतुर्विधा आदेशा स्युरिति। तेन तइ-तए-तुमए-तुमे ठिअमित्यादि रूपमनुसन्धेयमिति।

† अस्मद इति।—हमित्यादय प्रयोगा नाटकादौ द्रष्टव्या इति।

‡ अमीति।—सूत्रे चकारनिर्देशात् सुविभक्तावपि "अहम्मि" इत्यादेशो बोध्य इति।

मं ममं ॥ ४२ ॥

अमीति वर्त्तते। अस्मदः पदस्य अमि परतो "मं-ममं" इत्येतावादेशौ भवतः। मं—ममं पेक्ख। ( मां प्रेक्षस्व )। *

अम्हे जस्शसोः ॥ ४३ ॥

अस्मदः पदस्य जस्शसोः परतः "अम्हे" इत्ययमादेशो भवति। अम्हे आगदा। (वयमागताः)। अम्हे पेक्ख। (अस्मान् प्रेक्षस्व)।

णो शसि ॥ ४४ ॥

अस्मदः पदस्य शसि परतो "णो" इत्ययमादेशो भवति। णो पेक्ख। ( अस्मान् प्रेक्षस्व )। †

आङि मे-ममाइ ॥ ४५ ॥

अस्मदः पदस्य आङि परतो "मे-ममाइ" इत्येतावादेशौ भवतः। मे कअं—ममाइ कअं। ( मया कृतम् )। ‡

ङौ च मइ-मए ॥ ४६ ॥ §

अस्मदः पदस्य ङौ परतो "मइ-मए" इत्येतावादेशौ भवतः। चकारात् तृतीयैकवचने च। मइ—मए ठिअं। (मयि स्थितम्)। मइ—मए कअं। ( मया कृतम् )।

---

* अमीति।—पूर्वसूत्रात "अम्"-विभक्तिरागच्छतीति ज्ञेयम्। अतएव अमि त्रीणि पदानि भवन्तीति तात्पर्य्यं ज्ञेयमिति।

† णो इति।—अस्मच्छब्दस्य शसि परे "अम्हे णो" इति पदद्वय बोध्यम्।

‡ आङीति।—आङीति टाविभक्तेर्निर्देशः।

§ ङौ चेति।—सूत्रे चकारनिर्देशात् पूर्वसूत्रानुवृत्ता टाविभक्तिश्च ग्राह्येति भावः।

## अम्हेहिं भिसि ॥ ४७ ॥

अस्मदः पदस्य भिसि "अम्हेहिं" इत्ययमादेशो भवति। अम्हेहिं कअं। ( अस्माभिः कृतम् )।

## मत्तो-मइत्तो-ममादो-ममादु-ममाहि ङसौ ॥४८॥

अस्मदः पदस्य ङसौ परत एत आदेशा भवन्ति। मत्तो गदो। ( मद्गतः )। मइत्तो—ममादो—ममादु—ममाहि गदो। ( मद्गतः )। *

## अम्हाहिंतो-अम्हासुंतो भ्यसि ॥ ४९ ॥

अस्मदः पदस्य भ्यसि परतः "अम्हाहिंतो-अम्हासुंतो" इत्येतावादेशौ भवतः। अम्हाहिंतो—अम्हासुंतो गदो। (अस्मद् गतः)। †

## मे-मम-मह-मज्झ ङसि ॥ ५० ॥

अस्मदः पदस्य ङसि परत एत आदेशा भवन्ति। मे धणं। ( मम धनम् )। मम—मह—मज्झ धणं। ( मम धनम् )।

## मज्झणो-अम्ह-अम्हाणमम्हे आमि ॥ ५१ ॥

अस्मदः पदस्य आमि परत एत आदेशा भवन्ति। मज्झणो—अम्ह—अम्हाणं—अम्हे धणं। ( अस्माकं धनम् )।

---

* मत्तो इति।—अस्मच्छब्दस्य पञ्चमीविभक्तेरेकवचने पञ्च पदानि सुरिति तात्पर्य्यम्। एतेषामुदाहरणानि तु नाटकादावनुसन्धेयानि।

† अम्हाहिंतो इति।—सूत्रेऽस्मिन् तथा "अस्मद पदस्य" इत्यादि वृत्तावपि केवलं "भ्यसि" इति अविशेषेण ग्रहणात् किं चतुर्थीबहुवचने भ्यसि उत पञ्चमीबहुवचने भ्यसि इति सन्देहः। प्राकृते चतुर्थीस्थाने षष्ठीविभक्तेः प्रयोगविधानात् युष्मच्छब्दवत् अत्रापि "पञ्चमीबहुवचने" इति पदमनुवर्त्त्यं, समाधातव्यः इति।

**ममम्मि ङौ ॥ ५२ ॥**

अस्मदः पदस्य ङौ परतो "ममम्मि" इत्यादेशो भवति। ममम्मि ठिअं। (मयि स्थितम्)। पूर्वोक्तौ "मइ-मए" इत्येतौ च। *

**अम्हेसु सुपि ॥ ५३ ॥**

अस्मदः पदस्य सप्तमीबहुवचने सुपि परतः "अम्हेसु" इत्यादेशो भवति। अम्हेसु ठिअं। (अस्मासु स्थितम्)।

**द्वे र्दो ॥ ५४ ॥**

पदस्येति निवृत्तम्। सुपीति वर्त्तते। द्विशब्दस्य "दो" इत्ययमादेशो भवति सुपि परतः। दोहिं। (द्वाभ्याम्) दोसु। (द्वयोः)। †

**त्रेस्तिः ॥ ५५ ॥**

त्रिशब्दस्य सुपि परतः "ति" इत्यादेशो भवति। तीहि। (त्रिभिः)। तीसु। (त्रिषु)। ‡

* ङाविति।—अत्र "ङि"-विभक्तौ ममम्मीति सिद्धम्। पूर्वं "ङौ च मइ-मए" (६।४६) इत्यनेन सूत्रेण ङौ "मइ-मए" इति पदद्वयमुक्तम्। तदयस्यैव स्पष्टीकरणाय पुनरत्रापि वृत्तिकृता "पूर्वोक्तौ 'मइ मए' इत्येतौ च" इति समुट्टङ्कितमिति ज्ञेयम्।

† पदस्येतीति।—पूर्वं "पदस्य" (६।२५) इति सूत्रात पदसंज्ञाऽधिकारो जात , शब्दविधानपर्य्यन्त पदाधिकार', इह पदाधिकारनिवृत्तिरिति। इतः पर पुन शब्दाधिकार, तेनैव सुपीति वर्त्तत इत्युक्तम्। "द्विवचनस्य बहुवचनम्" (६।६३) इति वक्ष्यमाणसूत्रेण सुपां तिङाञ्च द्विवचनस्य बहुवचन प्रयोक्तव्यमिति, तेन "दोहि-दोसु" इत्यादि। एव परत्रापि यथायथ ज्ञेयम्।

‡ त्रिशब्दस्येति।—"तीहि-तीसु" इत्यादौ प्राक् रलोपः, ततः ह्रस्वस्वरस्य दीर्घत्वमिति।

## तिण्णि जस्-शस्भ्याम् ॥ ५६ ॥

त्रिशब्दस्य जस्शस्भ्यां सह "तिण्णि" इत्यादेशो भवति। तिण्णि आगदा। (त्रय आगताः)। तिण्णि पेक्ख (त्रीन् प्रेक्षस्व)।

## द्वेर्दुवे दोण्णि वा ॥ ५७ ॥

द्विशब्दस्य जस्शस्भ्यां सह "दुवे-दोण्णि" इत्येतावादेशौ भवत। दुवे कुणंति, दोण्णि कुणंति। पक्षे,—दो कुणंति (द्वौ कुरुत)। दुवे पेक्ख, दोण्णि पेक्ख। पक्षे,—दो पेक्ख (द्वौ प्रेक्षस्व)।

## चतुरश्चत्तारो-चत्तारि ॥ ५८ ॥

चतुःशब्दस्य जस्शस्भ्यां सह "चत्तारो-चत्तारि" इत्येतावादेशौ भवतः। चत्तारो—चत्तारि पुरिसा कुणंति। (चत्वारः पुरुषाः कुर्वन्ति)। चत्तारो—चत्तारि पुरिसे पेक्ख। (चतुरः पुरुषान् प्रेक्षस्व)।

## एषामामो ण्हं ॥ ५९ ॥

एषां द्वि-त्रि-चतुः-शब्दानामामः स्थाने "ण्हं" इत्ययमादेशो

---

द्वीति।—जसा शसा च सह द्विशब्दस्थाने "दुवे-दोण्णि" इत्यादेशौ; पक्षे,—"द्वेर्दो" (६।५४) इत्यनेन पुनर्दो इत्यादेशः। प्राकृतभाषायां द्विवचनं नास्तीत्येतदर्थमेव वृत्तिकारेण "जस्शस्भ्यां सह" इत्युक्तम्। क्रियापदस्यापि द्विवचनं नास्ति। तेनैव कुणंतीति कृधातोर्बहुवचनप्रयोग इति विदितव्यम्।

भवति । दोण्हं धणं । ( द्वयोः धनम् ) । तिण्हं धणं । (त्रयाणां धनम् ) । चतुण्हं धणं । ( चतुर्णां धनम् ) ।

**शेषोऽदन्तवत् ॥ ६० ॥**

शेषः सुब्विधिरदन्तवद् भवति । अकारान्तात् भिसो "हिं" इत्ययमादेश उक्त इकारोकारान्तादपि भवति । अग्गीहिं । ( अग्निभिः ) । वाऊहिं । ( वायुभिः ) । एवं मालाहिं । ( मालाभिः ) । णईहिं । ( नदीभिः ) । वहूहिं । (वधूभिः) । अग्गिस्स । ( अग्नेः ) । वाउस्स । (वायोः) । अग्गीदो, अग्गीदु । ( अग्नेः ) । वाऊदो, वाऊदु । ( वायोः ) । एवं दोहिं, तीहिं, चऊहिं । ( द्वाभ्यां, त्रिभिः, चतुर्भिः ) । *

**न ङिङस्योरेदातौ ॥ ६१ ॥**

इकारोकारान्तानां ङिङस्योरदन्तवत् एकाराकारौ न भवतः । अग्गिम्मि । वाउम्मि । ( अग्नौ । वायौ ) । अग्गीदो । अग्गीदु । अग्गीहि । ( अग्नेः ) । वाऊदो । वाऊदु । वाऊहि । ( वायोः ) । †

---

शेष इति ।—कथितेभ्य सुबन्तविधिभ्य अवशिष्टोऽय सुबन्तविधिरस्तीति शेषः, तेषामवशिष्टानां सुबन्तविधीनामकारान्तशब्दवत् कार्य्यं भवतीत्यर्थः । इतः पूर्वम् अकारान्तानां शब्दानां भिसः स्थाने यो "हि" इत्यादेशः कथितः, स चादेशः इकारान्तेभ्य उकारान्तेभ्यश्च शब्देभ्य उत्तरे स्यात्, तेन अग्गीहिमित्यादिस्थले अकारान्तशब्दवत् कार्य्यं जातमिति भावः ।

नेति ।—अधुना विधेः प्रतिषेधमाह ।—"ङि" विभक्तौ "ङसि" विभक्तौ च अकारान्तशब्दानां यथा एकाराकारौ जायेते, इकारान्तानामुकारान्तानाञ्च शब्दानां तादृशावादेशौ एकाराकाररूपौ न भवत इति तात्पर्य्यम् । अत्र वृत्तिकारेण उदाहृतानि पदानि दृष्ट्वैव तदर्थस्य निर्णीतत्वादिति बोध्यम् ।

## ए भ्यसि ॥ ६२ ॥

नेत्यनुवर्त्तते । भ्यसि परत इकारोकारान्तयोरदन्तवदेत्वं न भवति । अग्गीहिंतो—अग्गीसुंतो । वाऊहिंतो—वाऊसुंतो । ( अग्निभिः । वायुभिः ) ।

## द्विवचनस्य बहुवचनम् ॥ ६३ ॥

सर्वासां विभक्तीनां सुपां तिङाञ्च द्विवचनस्य बहुवचनं प्रयोक्तव्यम् । (वृक्षौ)—वच्छे । (वृक्षाभ्यां)—वच्छेहिं । (वृक्षाभ्यां) —वच्छाहितो । (वृक्षयोः)—वच्छाण । (वृक्षयोः)— वच्छेसु । तिङो यथा ।—चिट्ठंति—(तिष्ठतः) । *

## चतुर्थ्याः षष्ठी ॥ ६४ ॥

चतुर्थीविभक्तेः स्थाने षष्ठीविभक्तिर्भवति । बम्हणस्स देहि । (ब्राह्मणाय देहि) । बम्हणाण देहि । (ब्राह्मणेभ्यो देहि) । †

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ
सर्वनामविषयकः षष्ठः परिच्छेदः ।

---

* सर्वासामिति ।—सर्वासामित्यस्यैव व्याख्या सुपां तिङाञ्चेति, तेन सुबन्तानां तिङन्तानाञ्च सर्वासां विभक्तीनामित्यर्थो लभ्यत इति । द्विवचनस्थाने बहुवचन-प्रयोगः कार्य्यः । अतएव प्राकृतभाषायां सुबन्तविभक्तिषु तिङन्तविभक्तिषु च द्विवचनं नास्तीति फलितार्थो ज्ञेयः । धातुविभक्तेरुदाहरणं यथा ।—तिष्ठतः,—चिट्ठतीति । एवं सर्वत्र ।

† चतुर्थीति ।—प्राकृतभाषायां चतुर्थीविभक्तिस्थाने षष्ठीविभक्तिरावश्यकीति गम्यते । सम्प्रदाने चतुर्थीविभक्तिरेव नियमः, परमनेन सूत्रेण तस्य प्रतिषेधो ज्ञातव्यः ।

## अथ सप्तमः परिच्छेदः ।

### त-तिपोरिदेतौ ॥ १ ॥

"त-तिप्" इत्येतयोरेकैकस्य स्थाने "इत्-एत्" इत्येतावादेशौ भवतः। पढइ—पढए। (पठति, पठते)। सहइ—सहए। (सहति, सहते)। *

### थास्-सिपोः सि-से ॥ २ ॥

"थास्-सिप्" इत्येतयोरेकैकस्य स्थाने "सि-से" इत्येतावादेशौ भवतः। पढसि—पढसे। (अपठथाः, पठसि)। सहसि—सहसे। (असहथाः, सहसि)। †

### इट् मिपोर्मिः ॥ ३ ॥

"इट्-मिप्" इत्येतयोः स्थाने मिर्भवति। पढामि। हसामि। सहामि। ‡

### न्ति-हेत्था-मो-मु-मा बहुषु ॥ ४ ॥ §

बहुषु वर्त्तमानानां तिङां स्थाने "न्ति-ह-इत्था-मो-मु-म" इत्येत आदेशा भवन्ति। प्रथमपुरुषस्य।—रमंति। पढंति।

---

* तेति।—यस्यां तिङ्विभक्तौ "त"-इत्यस्ति तदेव गृहीतमत्रेति ज्ञेयम्।

† थासिति।—थासिति लङ्लुङोर्ग्रहणमित्यवगम्यते।

‡ इडिति।—यस्मिन् धातौ इट्प्राप्तेः सम्भावनाऽस्ति तद्धातोरिडत्र बोध्यम्।

§ न्तीत्यादि।—इमे षडादेशा प्रथममध्यमोत्तमपुरुषबहुवचनसङ्क्रान्ता ज्ञेया इति वृत्तिकारीत्या सूच्यते।

हसंति। (रमन्ते। पठन्ते। हसन्ते)। मध्यमस्य।—रमह। पढह। हसह। (रमध्वम्। पठथ, पठध्वम्। हसथ, हसध्वम्)। पढित्था। (पठथ, पठध्वम्)। उत्तमस्य।—पढामो—पढमु—पढम। (पठामः, पठामहे)।

## अत ए-से ॥ ५ ॥

नित्यार्थं वचनं यतो विशेषणम्। त-तिपोः सिप्-थासोः "ए-से" इत्यादेशावत एव परतः, नान्यस्मात्। त-तिपोः।—रमए। पढए। (अरमत, रमति। पठत, पठति)। सिप्-थासोः।—रमसे। पढसे। (रमसि, अरमथाः। पठसि, अपठथाः)। अत इति किम्?—होइ। (भवति)। *

## अस्तेर्लोपः ॥ ६ ॥

अस्तेर्धातोः थास्-सिपोरादेशयोः परतो लोपो भवति। सुत्तो सि। (सुप्तोऽसि)। पुरिसो सि। (पुरुषोऽसि)। †

## मि-मो-मु-मानामधो हश्च ॥ ७ ॥

मि-मो-मु-मानामस्तेः परेषामधो हकारः प्रयोक्तव्यः। अस्तेश्च लोपः। गओ म्हि। गअ म्हो—गअ म्हु—गअ म्ह। (गतोऽस्मि। गताः स्मः)। ‡

---

* नित्यार्थमिति।—यतो यस्मादिदं विधिवाक्यं, नित्यार्थमविकल्पार्थम्, अतोऽस्मात् कारणात्, तादीनां स्थाने अकारादुत्तर एवेति कार्य्यं ज्ञेयम्।

† अस्तेरिति।—थासि सिपि च आदेशे परे सति अस्धातोर्लोपः स्यात्।

‡ मीत्यादि।—अस्धातोः परवर्त्तिना मीत्यादीनामध, अधस्तात, हकारप्रयोगः कार्य्य इत्यर्थ। अस्धातोर्लोपश्च। उदाहरणानि दृष्ट्वा सूत्रार्थो बोध्य इति।

**यक ईअ-इज्जौ ॥ ८ ॥**

यकः स्थाने "ईअ-इज्ज" इत्यादेशौ भवतः। पढ़ीअइ—पढ़िज्जइ। (पठ्यते)। सहीअइ—सहिज्जइ। (सह्यते)। *

**नान्त्यद्वित्वे ॥ ९ ॥**

धातोरन्त्यद्वित्वे सति यक "ईअ-इज्ज" इत्यादेशौ न भवतः। हस्सइ। गम्मइ। (हस्यते। गम्यते)। गमादीनां विकल्पेन द्वित्वविधानात्, द्वित्वविधाने उक्तावादेशौ न भवतः; द्वित्वाविधाने तु भवत एव। गमीअइ—गमिज्जइ। †

**न्त-माणौ शतृ-शानचोः ॥ १० ॥**

शतृ-शानच् इत्येतयोरेकैकस्य "न्त-माण" इत्येतावादेशौ भवतः। पढंतो। (पठन्)। पढमाणो। (पठमानः)। हसंतो। (हसन्)। हसमाणो। (हसमानः)। ‡

**ई च स्त्रियाम् ॥ ११ ॥**

स्त्रियां वर्त्तमानयोः शतृ-शानचोरीकारादेशो भवति। न्त-माणौ च। हसई—हसंती। (हसन्ती)। हसई—हसमाणा।

---

* यक इति।—"यक" इत्यभिधानात् कर्म्मवाच्य-भाववाच्ययोर्ग्रहणमित्यवधेयम्।

† नान्त्येति।—यदा धातोरन्तस्थितवर्णस्य द्वित्व भवति, तदा भावकर्म्मणो "यक" स्थाने इमावादेशौ न भवतः। गमादीनां द्वित्वविधिः पाक्षिक, अतो द्वित्वविधानस्थले "ईअ-इज्ज"-इत्यादेशद्वय न भवति। परं द्वित्वाभावपक्ष एव तावादेशौ भवत इति तात्पर्य्यम्।

‡ शविति।—शतृ-शानच् इत्येतयोर्द्वयोर्मध्ये एकैकस्य एकमेकमित्येकैक तस्य स्थाने "न्त-माण" इत्येतावादेशौ भवत.। शतृस्थाने "न्त", शानच. स्थाने च "माण" इत्येव भागक्रमेण आदेशद्वय स्यादिति बोध्यम्।

§ स्त्रियामिति।—स्त्रीलिङ्गे वर्त्तमानस्य शतृ शानच् इत्येतस्य आदेशद्वयस्य

(हसमाना)। वेवई—वेवंतो। (वेपन्तो)। वेवई—वेवमाणा। (वेपमाना)। §

## धातोर्भविष्यति हिः ॥ १२ ॥

भविष्यति काले धातोः परो "हि"-शब्दः प्रयोक्तव्यः। होहिइ। (भविष्यति)। हसिहिइ। (हसिष्यति)। होहिंति। (भविष्यन्ति)। हसिहिंति। (हसिष्यन्ति)। *

## उत्तमे स्सा-हा च ॥ १३ ॥

भविष्यत्युत्तमे "स्सा-हा" इत्येतौ प्रयोक्तव्यौ। चकाराद् हिश्च। होस्सामि—होहामि—होहिमि। (भविष्यामि)। होस्सामो—होहामो—होहिमो। (भविष्यामः)। †

## मिना स्सं वा ॥ १४ ॥

भविष्यत्युत्तमे मिना सह धातोः परः "स्स"-शब्दः प्रयोक्तव्यो वा। होस्सं। पक्षे,—होस्सामि—होहामि—होहिमि। ‡

---

स्थाने ईकारः स्यादिति। सूत्रे चकारनिर्देशात पूर्वोक्त "न्त-माण" इत्यादेशद्वयश्च भवतीत्यर्थः। हसई-वेवईति पदद्वय शतरि शानचि चेति ज्ञेयम्।

* भविष्यतीति।—भविष्यति काले लृङ्‌विभक्तावित्यर्थ., धातो. पर. परवर्त्ती, एको "हि"-शब्दप्रयोग' कर्त्तव्य इत्यर्थ।

† उत्तम इति।—उत्तमपुरुषस्य विशेषमाह,—भविष्यत्काले उत्तमपुरुषे धातोः परवर्त्तिनौ "स्सा-हा" इत्येतौ आदेशौ प्रयोक्तव्यौ। अत्रापि सूत्रनिर्दिष्ट-"च" शब्देन पूर्वोक्त "हि" प्रयोगस्य विधेय इत्यर्थ। तस्मादुत्तमपुरुषस्यैकवचने त्रीणि पदानि जायन्त इति बोध्यम्।

‡ मिनेति।—भविष्यत्काले उत्तमपुरुषस्यैकवचने "मि"-विभक्त्या सह धातोः परवर्त्ती "स्स"-शब्दस्य प्रयोगो विकल्पेन कार्य्य इत्यर्थ.। वेति निर्देशात् पक्षे पूर्वोक्तस्य त्रयोदशसूत्रस्य कार्य्यं स्यादित्यर्थः।

मो-मु-मैर्हिस्सा-हित्था ॥ १५ ॥

भविष्यति काल उत्तमे बहुवचनादेशस्य "मो-मु-म" इत्येतैः सह "हिस्सा-हित्था" इत्येतावादेशौ वा भवतः। होहिस्सा—होहित्था। (भविष्यामः)। हसिहिस्सा—हसिहित्था। (हसिष्यामः)। पक्षे,—होहिमो—होस्सामो—होहामो। हसिहिमो—हसिस्सामो—हसिहामो। एव मुमयोरपि। इत्यादि। *

कृ-दा-श्रु-वचि-गमि-रुदि-दृशि-विदिरूपाणां काहं-दाहं-सोच्छं-वोच्छं-गच्छं-रोच्छं-दच्छं-वेच्छं ॥ १६ ॥

भविष्यति काल उत्तमैकवचने कृञादीनां स्थाने यथासंख्य "काहं"-प्रभृतय आदेशा भवन्ति। काहं। (करिष्यामि)। दाहं। (दास्यामि)। सोच्छं। (श्रोष्यामि)। वोच्छं। (वक्ष्यामि)। गच्छं। (गमिष्यामि)। रोच्छं। (रोदिष्यामि)। दच्छं। (द्रक्ष्यामि)। वेच्छं। (वेदिष्यामि)। इत्यादि। †

श्वादीनां त्रिष्वप्यनुस्वारवर्ज्जं हिलोपश्च वा ॥ १७ ॥

"श्रु" इत्येवमादीनां प्रथम-मध्यमोत्तमेषु त्रिष्वपि पुरुषेषु

---

* मो-मु मैरित्यादि।—भविष्यत्काले उत्तमपुरुषे बहुवचनसम्बन्धिन आदेशस्य मो-मु-मैरित्येतैः त्रिभि. सह "हिस्सा-हित्था" इत्यादेशद्वय विकल्पेन स्यादित्यर्थः। अतएवोत्तमपुरुषस्य बहुवचने पदचतुष्टय भवतीति बोध्यम्।

† कृदेत्यादि।—भविष्यत्काले उत्तमपुरुषस्यैकवचने कृप्रभृतीनामष्टाना धातूनां यथाक्रम "काह-दाह" इत्यादयोऽष्टौ आदेशा भवन्ति। "वेच्छं" इत्यत्र वेत्स्यामीति यदनुवादो दृश्यते, तन्न मनोरम, वेदिष्यामीति साधु। अतएवास्माभि वेदिष्यामीति कृतम्।

‡ श्वादीनामित्यादि।—श्वादीनामित्यनेनाभिधानेन "कृ-दा" इत्येतौ धातू वर्ज्जिताविति ज्ञेयम्। भविष्यत्काले प्रथममध्यमोत्तमेषु त्रिष्वपि पुरुषेषु परेषु सत्सु

परतो भविष्यति काले "सोच्छं" इत्यादय आदेशा भवन्ति। अनुस्वारं विहाय। हिलोपश्च वा।

सोच्छिइ—सोच्छिहिइ। (श्रोष्यति)। सोच्छिंति—सोच्छिहिति। (श्रोष्यन्ति)। सोच्छिसि—सोच्छिहिसि। (श्रोष्यसि)। सोच्छित्था—सोच्छिहित्था। (श्रोष्यथ)। सोच्छिमि—सोच्छिहिमि। (श्रोष्यामि)। सोच्छिमो—सोच्छिहिमो—सोच्छिमु—सोच्छिहिमु—सोच्छिम—सोच्छिहिम—सोच्छिस्सामो—सोच्छिस्सामु—सोच्छिस्साम। (श्रोष्यामः)। एव बोच्छादिरपि। ‡

## उ-सु-मु विध्यादिष्वेकस्मिन् ॥ १८ ॥

विध्यादिष्वेकस्मिन्नुत्पन्नस्य प्रत्ययस्य यथासंख्यं "उ-सु-मु" इत्येत आदेशा भवन्ति। हसउ। (हसतु)। हससु। (हस)। हसमु। (हसानि)। *

## न्तु-ह-मो बहुषु ॥ १९ ॥

विध्यादिषु बहुषूत्पन्नस्य प्रत्ययस्य यथासंख्यं "न्तु-ह-मो" इत्येत आदेशा भवन्ति। हसंतु। (हसन्तु)। हसह। (हसत)। हसामो। (हसाम)। †

---

‡ श्रुप्रभृतीनां षष्ठा धातूनां सोच्छमित्यादय आदेशा भवन्ति। अयन्तु आदेश, अनुस्वार त्यक्त्वा भविष्यतीति तात्पर्य्यम्। अस्मिन् विधौ भविष्यत्काले विहितस्य "हि'-इत्यादेशस्य च विकल्पेन लोप. स्यादित्यर्थ.। सर्वत्रानुस्वारलोप, हिलोपश्च वैकल्पिक इत्यवगन्तव्यम्। सोच्छिमो इत्यादि।—श्रुधातोरुत्तमपुरुषस्य बहुवचने नव पदानि भवन्तीति। एवमिति।—वोच्छिमो वोच्छिहिमो वोच्छिमु, इत्येवं रीत्या वच्यादीनामपि नव रूपाणि स्युरित्येव बोध्यमिति।

* उ-सु-म्वित्यादि।—विध्यादिषु अर्थेषु मध्ये एकस्मिन्नर्थे जातस्य प्रत्ययस्य यथाक्रम वय आदेशा भवन्तीत्यर्थ।

† विध्यादिष्विति।—विध्यादिष्वर्थेषु विधिलिङि, लोटीति यावत्, बहुषु

## वर्त्तमान-भविष्यदनद्यतनयोर्ज्ज-ज्जा वा ॥२०॥

वर्त्तमाने भविष्यदनद्यतने विध्यादिषु चोत्पन्नस्य प्रत्ययस्य "ज्ज-ज्जा" इत्येतावादेशौ वा भवतः। पक्षे यथाप्राप्तम्। वर्त्तमाने तावत्।—होज्ज—होज्जा। (भवति)। हसेज्ज—हसेज्जा। (हसति)। पक्षे—होइ। (भवति)। हसइ। (हसति)। भविष्यदनद्यतने।—होज्ज—होज्जा। (भविष्यति)। पक्षे—होहिइ। (भविष्यति)। इत्यादि। विध्यादिष्वेवम्। *

## मध्ये च ॥ २१ ॥

वर्त्तमान-भविष्यदनद्यतनयोर्विध्यादिषु च धातुप्रत्यययोर्मध्ये "ज्ज-ज्जा" इत्येतावादेशौ वा भवतः। वर्त्तमाने।—होज्जइ—होज्जाइ। (भवति)। पक्षे यथाप्राप्तम्। विध्यादिषु।—होज्जउ—होज्जाउ। (भवेत्)। इत्यादि। †

---

बहुवचनेषु "अन्तु त-आम"-इत्येतेषु त्रिषु प्रथममध्यमोत्तमपुरुषबहुवचनेषु यथाक्रम "न्तु ह मो" इति त्रय आदेशा भवन्तीत्यर्थ.। उदाहरणानि दृष्ट्वा सूत्रार्थौ ज्ञातव्य इति भाव.।

* वर्त्तमान इति।—वर्त्तमानकाले लटीत्यर्थ, यद्व भविष्यत न अद्यतन, तादृशे अनद्यतने भविष्यत्काले, तथा पूर्वसूत्रानुवृत्तेषु विध्यादिषु चार्थेषु जाती यः प्रत्ययस्तस्य स्थाने "ज्ज-ज्जा"-इत्यादेशद्वय विकल्पेन भवति। पक्षान्तरे यथाप्राप्त यथोक्तं कार्य्यं तथा भवतीत्यर्थः। विध्यादिष्वेवमिति।—यथा लटि, यथा अनद्यतने भविष्यतकाले, तथा विधिलिङि लोट्यपि कार्य्यं भवतीति तात्पर्य्यमुन्नेयम्।

† मध्ये चेति।—वर्त्तमानकाले अनद्यतने भविष्यति ( लोटि ) विधिलिङि च धातोः प्रत्ययस्य च मध्यस्थले "ज्ज-ज्जा" इति आदेशद्वय विकल्पेन भवति, पक्षे,—पूर्वसूत्रानुवृत्त यथाविहित कार्य्यञ्च स्यादित्यर्थः।

**नानेकाचः ॥ २२ ॥**

वर्त्तमान-भविष्यदनद्यतनयोर्विध्यादिषु च अनेकाचो धातोः प्रत्यये परे मध्ये "ज्ज-ज्जा" इत्येतावादेशौ न भवतः। किन्तु अन्त एव भवतः। हसइ। (हसति)। तुवरइ। (त्वरते)। अन्ते यथा।—हसेज्ज—हसेज्जा। (हसति, हसिष्यति, हसतु, हसेत्)। तुवरेज्ज—तुवरेज्जा। (त्वरते, त्वरिष्यते, त्वरताम्, त्वरेत)। एवमन्येऽप्युदाहर्त्तव्याः। *

**ईअ भूते ॥ २३ ॥**

भूते काले धातोः प्रत्ययस्य "ईअ" इत्ययमादेशो भवति। हुवीअ। (अभवत्)। हसीअ। (अहसत्)। †

**एकाचो हीअ ॥ २४ ॥**

भूते काले एकाचो धातोः प्रत्ययस्य "हीअ" इत्ययमादेशो भवति। होहीअ। (अभूत्)। ‡

---

* नानेकाच इति।—वर्त्तमानप्रभृतिषु, अनेकाचो बहुस्वरविशिष्टस्य, धातो. प्रत्यये परे सति, मध्ये मध्यस्थले, "ज्ज-ज्जा" इति आदेशद्वयं न भवति, किन्तु अन्ते शेष एव, उक्तकार्य्यं भवेदित्यर्थ.। एवमिति।—एवमित्थम्, अन्ये अपरेऽपि, उदाहर्त्तव्या उदाहरणीयाः, अन्येषामुदाहरणानि द्रष्टव्यानीत्यर्थ.।

† भूत इति।—भूते काले लङि लुङि चेत्यथ.।

‡ एकाच इति।—अत्र विशेषमाह।—एकाच एकस्वरविशिष्टस्य धातोः "हीअ" इति आदेशो भवति। "ईअ" इति भूतकाले धातुप्रत्ययस्य साधारणविधिः। एकस्वरविशिष्टस्य धातो प्रत्ययस्य स्थाने अतीतकाले हीआदेश इति तु विशेषविधिरवगन्तव्य इति तात्पर्य्यम्।

**अस्तेरासिः ॥ २५ ॥**

अस्तेर्भूते काल एकस्मिन्नर्थे "आसि" इति निपात्यते। आसि राआ। (आसीद्राजा)। आसि बहू। (आसीद्वधूः)। *

**णिच एदादेरत आत् ॥ २६ ॥**

णिच्प्रत्ययस्य एकारादेशो भवति। धातोरादेरकारस्य च आत्वं भवति। कारेइ। (कारयति)। हासेइ। (हासयति)। पाढेइ। (पाठयति)। †

**आवे च ॥ २७ ॥**

णिच "आवे" इत्ययमादेशो भवति। चकारात् पूर्वोक्तश्च। करावेइ। (कारयति)। हसावेइ। (हासयति)। पढ़ावेइ। (पाठयति)। कारावेइ इत्यादि। ‡

**आविः क्तकर्म्मभावेषु वा ॥ २८ ॥**

णिच आविरादेशो भवति वा क्तप्रत्यये परतो भावकर्म्मणोश्च। कराविअं—कारिअं। (कारितम्)। हसाविअं—

---

* एकस्मिन्निति।—एकवचन इति यावत्। निपातनादयमादेश इति बोध्यम्।

† णिच इति।—णिच्प्रत्यये कृते तस्य स्थाने एकार., धातोरादिस्थस्य अकारस्य च आकारो भवति। "कारेइ" इत्यत्र आदौ णिच्, तस्य स्थाने एकार., "कर्"-एवम्भूतस्य धातोरादिस्थितस्य अकारस्य आकार इति ज्ञेयम्।

‡ आवे चेति।—आदौ णिचः स्थाने "आवे" इत्यादेशो भवति, पश्चात णिच्-प्रत्ययस्थाने एकार., ततो धातोरादिस्थितस्य अकारस्य आकारः, एतदर्थज्ञापनार्थमेव "चकारात् पूर्वोक्तश्च" इत्युक्तम्। "कारावेइ" इति।—अत्र आदौ णिच्-प्रत्ययस्थाने एकार., "कर्"-इत्येव रूपस्य धातोरादिस्थस्य अकारस्य आकार, "आवे" इत्यादेशस्तु पूर्ववत्, तेन "कारावेइ" इति सिद्धम्।

§ आविरिति।—"क्त"-प्रत्यये परे भावे कर्म्मणि च वाच्ये णिच्प्रत्ययस्थाने 'आवि' -इत्यादेशो विकल्पेन भवति। "आवि"-इत्यादेशे कृते "कराविअं", पक्षे

हासिअं । (हासितम्) । पढ़ाविअं—पाढिअं । (पाठितम्) । भावकर्म्मणोश्च ।—कराविज्जइ—कारिज्जइ । (कार्य्यते) । हसाविज्जइ—हासिज्जइ । (हास्यते) । पढ़ाविज्जइ—पाढिज्जइ । (पाठ्यते) । §

नैदावे ॥ २९ ॥

क्तभावकर्म्मसु णिच्प्रत्ययस्य "एत्"-"आवे" इत्येतावादेशौ न भवतः । कारिअ—कराविअं । (कारितम्) । कारिज्जइ—कराविज्जइ । (कार्य्यते) । *

अत आ मिपि वा ॥ ३० ॥

अकारान्ताद्धातोः मिपि परत आकारादेशो भवति वा । हसामि—हसमि । (हसामि) । †

इच्च बहुषु ॥ ३१ ॥

मिपो बहुषु परतोऽत इकारादेशो भवति । चकारादाकारश्च । हसिमो—हसामो—हसिमु—हसामु । (हसामः) । ‡

---

—"कारिअम्" इति । एवमन्यत्रापि बोध्यम् । "कराविज्जइ" इत्यत्र भावे कर्म्मणि वा णिजन्तस्य कृधातो रूपम् , पक्षे—"कारिज्जइ" इत्यादिकमुन्नेयमिति ।

* क्तेति ।—"क्त"-प्रत्यये कृते भावे कर्म्मणि च वाच्ये णिच. स्थाने "एत्"-"आवे" इत्यादेशद्वयं न भवतीत्यर्थः ।

† अत इति ।—मिपप्रत्यये परे सति अकारान्ताद्धातोर्विकल्पेन आकारः स्यादित्यर्थः ।

‡ इच्चेति ।—मिपो बहुषु उत्तमपुरुषस्य बहुवचनेष्वित्यर्थः, अकारान्तस्य धातोरिकारादेशो भवति । सूत्रस्थ-चकारेण पूर्वसूत्रानुवृत्त आकारादेशश्च भवतीत्यर्थः ।

क्ते ॥ ३२ ॥

क्तप्रत्यये परतोऽत इर्भवति। हसिअं। (हसितम्)। पढ़िअं। (पठितम्)। *

ए च क्त्वा-तुमुन्-तव्य-भविष्यत्सु ॥ ३३ ॥

"क्त्वा-तुमुन्-तव्य" इत्येतेषु भविष्यति काले च अत एत्वं भवति। चकारादित्त्व। हसेऊण—हसिऊण। (हसित्वा)। हसेउं—हसिउं। (हसितुम्)। हसेअव्वं—हसिअव्व। (हसितव्यम्)। हसेहिइ—हसिहिइ। (हसिष्यति)। †

लादेशे वा ॥ ३४ ॥

लकारादेशे परतोऽत एत्व भवति वा। हसेइ—हसइ। (हसति)। पढेइ—पढ़इ। (पठति)। हसेंति—हसंति। (हसन्ति)। हसेउ—हसउ। (हसतु)। ‡

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ तिङ्विधिर्नाम सप्तमः परिच्छेदः।

---

* क्तेति।—"क्त"-प्रत्यये कृते सति आकारान्ताद्धातोरुत्तरे इकारादेशश्च स्यादिति बोध्यम्।

† ए चेति।—क्त्वा-तुमुन्-तव्येषु कृतेषु तथा भविष्यत्काले च लृटीत्यर्थ अकारान्तस्य धातोः स्थाने एकारादेशो भवतीत्यर्थः।

‡ लकारेति।—लकारादेश इत्यनेन दशलकारा लट्लोट्प्रभृतयो ग्राह्या.। तादृशे लकारादेशे परे सति धातोरकारस्य स्थाने विकल्पेन इकारो भवति।

# अथाष्टमः परिच्छेदः ।

## भुवो हो-हुवौ ॥ १ ॥

भू सत्तायाम् । एतस्य धातोः "हो-हुव" इत्येतावादेशौ भवतः । होइ—हुवइ । ( भवति ) । होंति—हुवंति । (भवन्ति) । *

## क्ते हुः ॥ २ ॥

भुवः क्तप्रत्यये परतो "हु" इत्यादेशो भवति । हुअं । (भूतम्) ।

## प्रादेर्भवः ॥ ३ ॥

प्रादेरुत्तरस्य भुवो "भव" इत्यादेशो भवति । पभवइ । (प्रभवति) । उब्भवइ । (उद्भवति) । संभवइ । (सम्भवति) । परिभवइ । (परिभवति) । †

## त्वरस्तुवरः ॥ ४ ॥

ञि त्वरा सम्भ्रमे । अस्य धातोः "तुवर" इत्ययमादेशो भवति । तुवरइ । (त्वरते) ।

## क्ते तुरः ॥ ५ ॥

क्तप्रत्यये "तुर" इत्ययमादेशो भवति । तुरिअं । (त्वरितम्) ।

---

* भू सत्तायामिति ।—इत परं धात्वादेशोऽधिक्रियते, तदर्थमयमुपक्रम इत्यर्थ ।

† प्रादेरिति ।—उपसर्गादुत्तरस्य भूधातोर्भवादेश । केवलस्य तु होहुवाविति विशेष इत्यर्थ ।

घुणो घोलः ॥ ६ ॥

घुण घूर्ण भ्रमणे। अस्य धातोः "घोल" इत्ययमादेशो भवति। घोलइ। (घुणते)। *

णुदो णोल्लः ॥ ७ ॥

णुद प्रेरणे। अस्य धातोः "णोल्ल" इत्ययमादेशो भवति। णोल्लइ। (नुदति)। पणोल्लइ। (प्रणोदति)। †

दूङो दूमः ॥ ८ ॥

दूङ् परितापे। अस्य धातोर्दूमादेशो भवति। दूमइ। (दूयते)। ‡

पटेः फलः ॥ ९ ॥

अट पट गतौ। अस्य धातोः "फल" इत्ययमादेशो भवति। फलिअं हिअअं। (पटितं हृदयम्)। §

पदेः पालः ॥ १० ॥

पद गतौ। अस्य धातोः "पाल" इत्ययमादेशो भवति। पालेइ। (पद्यते)। ¶

---

* घुणेत्यादि।—सूत्रे "घुण" इति निर्देशात् घुणधातोः स्थान एव घोलादेशः। केचिदिह घूर्णधातुस्थानेऽपि घोलादेशमाहुरिति।

† णुदेति।—इह "णुद" इति ग्रहणात् सोपसर्गस्य निरुपसर्गस्य चेति णुदधातोः स्थान एव णोल्लादेश इत्यवगम्यत इति बोध्यम्। "णोल्लइ" "पणोल्लइ"-इत्युभयविधोदाहरणदर्शनेनैव अयमेवार्थः स्फुटं ज्ञायते।

‡ दूङिति।—अयं दैवादिक आत्मनेपदी।

§ पटेति।—अस्य लटि तु "फलइ"-इत्येव भवति।

¶ पदेति।—"पालेइ"-इत्युदाहरणेनास्य णिजन्तत्वं गम्यते, तेन "णिच एदादेरत आत्" (७।२६) इत्यस्य सूत्रस्य कार्यं बोध्यम्।

## वृष-कृष-मृष-हृषामृतोऽरिः ॥ ११ ॥

वृषादीनामृतः स्थाने "अरि" इत्यादेशो भवति । वरिसइ । (वर्षति) । करिसइ । (कर्षति) । मरिसइ । (मर्षति) । हरिसइ । (हृष्यति) ।

## ऋतोऽरः ॥ १२ ॥

ऋकारान्तस्य धातोः ऋतः स्थाने "अर" इत्यादेशो भवति । मृ ।—मरइ । (म्रियते) । सृ ।—सरइ । (सरति) । वृ ।—वरइ । (वृणोति—वृणुते । वृणाति—वृणीते) । *

## कृञः कुणो वा ॥ १३ ॥

डु कृञ् करणे । अस्य धातोः प्रयोगे कुणो वा भवति । कुणइ—करइ । (करोति, कुरुते ) । †

## जृम्भो जंभाअः ॥ १४ ॥

जभि जृम्भी गात्रविनामे । अस्य धातोः "जंभाअ" इत्ययमादेशो भवति । जंभाअइ । (जृम्भते ) । ‡

## ग्रहेर्गेण्हः ॥ १५ ॥

ग्रह उपादाने । अस्य धातोर्गेण्हो भवति । गेण्हइ । (गृह्णाति) ।

## घेत् क्त्वा-तुमुन्-तव्येषु ॥ १६ ॥

ग्रहेर्घेत् इत्ययमादेशो भवति, क्त्वा तुमुन्-तव्येषु परतः ।

---

* ऋत इति ।—वृधातुर्बहुषु गणेषु पठ्यते, अत्र गणद्वय दर्शितमिति ।

† डु कृञिति ।—सूत्रे वेति ग्रहणात पक्षे "ऋतोऽर" इति पूर्वसूत्रस्य कार्य्यं ज्ञेयम् ।

‡ जभीति ।—गात्रविनामोऽङ्गविस्तार इत्यर्थः, प्रकाशार्थस्य क्वचिद्द दृश्यते,—"मधर्जजृम्भे" इति कुमारसम्भवम् ।

घेत्तूण। (गृहीत्वा)। घेत्तुं। (ग्रहीतुम्)। घेत्तव्वं। (ग्रहीतव्यम्)।

## कृञः का भूत-भविष्यतोश्च ॥ १७ ॥

भूतभविष्यतोः कालयोः कृञः का इत्ययमादेशो भवति। चकारात् क्त्वा-तुमुन्-तव्येषु परतः। काहीअ। (अकार्षीत्)। काहिइ। (करिष्यति)। काऊण। (कृत्वा)। काउं। (कर्त्तुम्)। काअव्वं। (कर्त्तव्यम्)।

## स्मरतेर्भर-सुमरौ ॥ १८ ॥

स्मृ चिन्तायाम्। अस्य धातोर्भर-सुमरौ भवतः। भरइ—सुमरइ। (स्मरति)।

## भियो भा-बीहौ ॥ १९ ॥

ञि भी भये। अस्य धातोर्भा-बीहौ भवतः। भाइ—बीहइ। (बिभेति, बिभोति)।

## जिघ्रतेः पा-पाअौ ॥ २० ॥

घ्रा गन्धग्रहणे। अस्य धातोः "पा-पाअ" इत्यादेशौ भवतः। पाइ—पाअइ। (जिघ्रति)। *

## म्लै वा-वाअौ ॥ २१ ॥

म्लै कान्तिक्षये। अस्य धातोर्वा-वाअौ भवतः। वाइ—वाअइ। (म्लायति)। †

## तृपस्थिंपः ॥ २२ ॥

तृप तृम्प तृप्तौ। अस्य धातोस्थिंपो भवति। थिंपइ। (तृप्यति)।

---

* घ्रेति।—पा च पाअश्च पापाअौ इति द्वन्द्वसमास.।

† म्लायिति।—वा च वाअश्च वावाअौ। अत्रापि पूर्ववत् समासः।

**ज्ञो जाण-मुणौ ॥ २३ ॥**

ज्ञा अवबोधने। अस्य धातोर्जाण-मुणौ भवतः। जाणइ—मुणइ। (जानाति, जानीते)।

**जल्पेर्लो मः ॥ २४ ॥**

जल्प व्यक्तायां वाचि। अस्य धातोर्लकारस्य मकारो भवति। जंपइ। (जल्पति)। *

**ष्ठा-ध्या-गानां ठाअ-झाअ-गाआः ॥ २५ ॥**

ष्ठा गतिनिवृत्तौ। ध्यै चिन्तायाम्। कै गे रै शब्दे। एतेषां "ठाअ-झाअ-गाअ" इत्येत आदेशा भवन्ति। ठाअंति। (तिष्ठन्ति)। झाअति। (ध्यायन्ति)। गाअति। (गायन्ति)। †

**ठाझागाश्च वर्त्तमान-भविष्यद्विध्याद्येक-वचनेषु ॥ २६ ॥**

ष्ठा-ध्या-गानां "ठा-झा गा" इत्यादेशा भवन्ति। चकारात् पूर्वोक्ताश्च वर्त्तमान-भविष्यद्विध्याद्येकवचनेषु परतः। ठाइ—ठाअइ। (तिष्ठति)। ठाहिइ—ठाअहिइ। (स्थास्यति)। ठाउ—ठाअउ। (तिष्ठतु)। झाइ—झाअइ। (ध्यायति)। झाहिइ—झाअहिइ। (ध्यास्यति)। झाउ—झाअउ। (ध्यायतु)। गाइ—गाअइ। (गायति)। गाहिइ—गाअहिइ। (गास्यति)। गाउ—गाअउ। (गायतु)। ‡

---

* जल्पेति।—व्यक्तायां वाचि स्पष्टीकृते वाक्ये। जल्पधातोर्लकारस्य स्थाने मकारे कृते जंपइति सिद्धम्।

† ष्ठेत्यादि।—एतेषां त्रयाणां धातूनां स्थाने यथाक्रमं "ठाअ" इत्यादयस्त्रय आदेशा भवन्ति।

‡ ठेत्यादि।—वर्त्तमानकाले भविष्यत्काले विध्याद्यर्थवाचके लोटि (विधिलिङि

## खादिधाव्योः खाधौ ॥ २७ ॥

खादृ भक्षणे। धावु जवे। एतयोर्धात्वोः "खा-धा" इत्यादेशौ भवतः वर्त्तमान-भविष्यद्विध्याद्येकवचनेषु। खाइ। (खादति)। खाहिइ। (खादिष्यति)। खाउ। (खादतु)। धाइ। (धावति)। धाहिइ। (धाविष्यति)। धाउ। (धावतु)।

## ग्रसेर्विसः ॥ २८ ॥

ग्रसु ग्लसु अदने। अस्य धातोर्विसो भवति। विसइ। (ग्रसति)।

## चिञश्चिणः ॥ २९ ॥

चिञ् चयने। अस्य धातोश्चिणो भवति। चिणइ। (चिनोति, चिनुते)।

## क्रीञः किणः ॥ ३० ॥

डु क्रीञ् द्रव्यविनिमये। अस्य धातोः किणो भवति। किणइ। (क्रीणाति)।

## वेः क्के च ॥ ३१ ॥

वेरुत्तरस्य क्रीञः क्के आदेशः किणादेशश्च भवति। बिक्केइ—बिक्किणइ। (विक्रीणीते)।

## उद्ध्मः उद्धुमा ॥ ३२ ॥

ध्मा शब्दाग्निसंयोगयोः। अस्य धातोरुत्पूर्वस्य "उद्धुमा" भवति। उद्धुमाइ। (उद्धमति)।

---

च) केवलमेतेषामेकवचनेषु "ठा-झा-गा" इत्यादेशास्त्रयो भवन्ति। सूत्रस्य "च"-शब्देन वर्त्तमानादीनामेकवचनेषु परेषु पुन पूर्वकथिता "ठाअ-झाअ-गाअ" इत्येते आदेशास्तु, अतएव वर्त्तमानादीनामेकवचनेषु प्रत्येक पदद्वय दृश्यत इति बोध्यम्।

## अदो धो दहः ॥ ३३ ॥

अच्छब्दादुत्तरस्य "डु धाञ् धारण-पोषणयो:" अस्य धातोर्दहादेशो भवति। सद्दहइ। (श्रद्दधाति, श्रद्धत्ते)। सद्दहिअं। श्रद्धितम्)।

## अवाद् गाहेर्बाहः ॥ ३४ ॥

गाहृ विलोडने। अस्य धातोरवादुत्तरस्य बाहादेशो भवति ओबाहइ—अववाहइ। (अवगाहते)। *

## कासेर्वासः ॥ ३५ ॥

अवादित्यनुवर्त्तते। कासृ शब्दकुत्सायाम्। अस्य धातोरवादुत्तरस्य बासो भवति। ओबासइ—अवबासइ। (अवकासति)। †

## निरो माङो माणः ॥ ३६ ॥

माङ् माने। अस्य धातोर्निरुत्तरस्य माणादेशो भवति। णिम्माणइ। ( निर्माति, निर्मिमीते)।

## क्षियो झिज्जः ॥ ३७ ॥

क्षि क्षये। अस्य धातोर्झिज्जो भवति। झिज्जइ। (क्षियति)।

## भिदिच्छिदोरन्त्यस्य न्दः ॥ ३८ ॥

भिदिर् भेदने। छिदिर् छेदने। एतयोरन्त्यस्य न्दो भवति। भिन्दइ। (भिनत्ति, भिन्ते)। छिन्दइ। (छिनत्ति, छिन्ते)।

---

* अवादिति।—"ओदवापयो." (४।२१) इत्यनेन अवोपसर्गस्य विकल्पेन ओत्वं, तेन ओबाहइ, पक्षे,—अववाहइ।

† अवादिति।—अनुवर्त्तते—अनुसरति, पूर्वसूत्रादागच्छतीत्यर्थः। शब्दकुत्साया कुत्सिते शब्द इत्यर्थ। अत्रापि अवोपसर्गस्य वैकल्पिकमोत्व ज्ञेयम्।

**क्वथेर्ढः ॥ ३९ ॥**

क्वथ निष्पाके। अस्य धातोरन्त्यस्य ढो भवति। कढइ। (क्वथते)।

**वेष्टेश्च ॥ ४० ॥**

वेष्ट वेष्टने। अस्य धातोरन्त्यस्य ढो भवति। वेढ्ढइ। ( वेष्टते)। योगविभाग उत्तरार्थः। *

**उत्समोर्ल्लः ॥ ४१ ॥**

उत्संभ्यामुत्तरस्य वेष्टेरन्त्यस्य ल्लो भवति। उव्वेल्लइ (उद्वेष्टते)। संवेल्लइ। (संवेष्टते)। †

**रुदेर्वः ॥ ४२ ॥**

रुदिर् अश्रुविमोचने। अस्य धातोरन्त्यस्य वो भवति। रुवइ। (रोदिति)।

**उद्वो विजः ॥ ४३ ॥**

उत्पूर्वस्य विजेरन्त्यस्य वकारो भवति। उव्विवइ। (उद्विजते)।

**वृधेर्ढः ॥ ४४ ॥**

वृधु वर्द्धने। अस्य धातोरन्त्यस्य ढो भवति। वड्ढइ। (वर्द्धते)।

---

* योगविभाग इति।—योगस्य सयोगस्य, विभागः भागकरण, "वेष्टेश्च" इति सूत्रस्य पृथग्रूपेण निर्देश इत्यर्थ., उत्तरार्थं परसूत्रार्थं इति बोध्यम्। अन्त्यस्य अन्तस्थितवर्णस्य ष्टकारस्येत्यर्थः। ढकारे कृते ततष्टवर्गस्य तृतीयवर्णस्य द्वित्वम्।

† उदिति।—वेष्टधातोरन्तस्थितवर्णस्य लकार, उदित्यस्य तकारस्य लोप, ततो वकारस्य द्वित्वं, पश्चात् लकारस्यापि द्वित्वमित्थम् "उव्वेल्लइ" इति पदं सिद्धम्।

**हन्तेर्म्मः ॥ ४५ ॥**

हन्तेरन्त्यस्य म्मो भवति । हम्मइ । (हन्ति) ।

**रुषादीनां दीर्घता ॥ ४६ ॥**

रुषादीनां दीर्घता भवति । रूसइ । (रुष्यति) । तूसइ । (तुष्यति) । सूसइ । (शुष्यति) । *

**च्चो व्रज-नृत्योः ॥ ४७ ॥**

व्रज-नृती । अनयोरन्त्यस्य च्चो भवति । वच्चइ । (व्रजति) । णच्चइ । (नृत्यति) ।

**युधि-बुध्योर्ज्झः ॥ ४८ ॥**

युध संप्रहारे । बुध अवबोधने । अनयोरन्त्यस्य ज्झो भवति । जुज्झइ । (युध्यते) । बुज्झइ । (बुध्यते) ।

**रुधेर्न्धम्भौ ॥ ४९ ॥**

रुधिर आवरणे । अस्य धातोरन्त्यस्य न्धम्भौ भवतः । रुन्धइ—रुम्भइ । (रुणद्धि, रुन्धे) । †

**मृदो लः ॥ ५० ॥**

मृद क्षालने । अस्य धातोरन्त्यस्य लो भवति । मलइ । (मृद्नाति) ।

---

* रुषादीनामिति ।—रुष्धातोर्ग्रहणादमीषां दैवादिकत्वमवगम्यते । दीर्घतेत्यभिधानात् धातोरादिस्थितस्य स्वरवर्णस्यैव दीर्घत्वम्, अन्त्यस्वराभावादिति भाव ।

† रुधिर् ।—रुधिरिति निर्देशात् इरित् धातुरय गणपाठेषु पठ्यत इति तात्पर्य्यं बोध्यम् । अस्य धातोरन्तस्थितस्य वर्णस्य धकारस्य स्थाने "न्ध"-"म्भ" इत्यादेशद्वय भवतीत्यर्थं ।

## शदृलृपत्योर्डः ॥ ५१ ॥

शद्लृ शातने। पत्लृ पतने। अनयोरन्त्यस्य डो भवति। सडइ। (शीयते)। पडइ। (पतति)।

## शकादीनां द्वित्वम् ॥ ५२ ॥

शक्लृ शक्तौ—इत्येवमादीनां द्वित्वं भवति। सक्कइ। (शक्नोति)। लग्गइ। (लगति)।

## स्फुटिचल्योर्वा ॥ ५३ ॥

स्फुट विकसने। चल कम्पने। अनयोरन्त्यस्य वा द्वित्व भवति। फुट्टइ—फुडइ। (स्फुटति)। चल्लइ—चलइ। (चलति)।

## प्रादेर्मीलः ॥ ५४ ॥

प्रादेरुत्तरस्य मीलधातोरन्त्यस्य द्वित्वं भवति वा। पमिल्लइ—पमीलइ। (प्रमीलति)।

## भुजादीनां क्त्वा-तुमुन्-तव्येषु लोपः ॥ ५५ ॥ *

भुज इत्येवमादीनां क्त्वा-तुमुन्-तव्येषु परतोऽन्त्यस्य लोपो भवति। भोत्तूण। (भुक्त्वा)। भोत्तुं। (भोक्तुम्)। भोत्तव्वं। (भोक्तव्यम्)। विदः।—वेत्तूण। (विदित्वा)। वेत्तुं। (वेदितुम्)। वेत्तव्व। (वेदितव्यम)। रुदः।—रोत्तूण। (रुदित्वा)। रोत्तुं। (रोदितुम्(। रोत्तव्वं। (रोदितव्यम्)।

## श्रु-हु-जि-लू-धुवां णोऽन्त्ये ह्रस्वः ॥ ५६ ॥

श्रु श्रवणे। हु दानादाने। जि जये। लूञ् छेदने। धूञ्

---

* भुजादीनामिति।—भुजादीनामिति ग्रहणार्दतत्समानां व्यञ्जनान्तानां धातूनामेवान्तस्थितवर्णलोपो भवतीति ज्ञायते, न तु स्वरान्ताना धातूनामिति तात्पर्य्यम्।

कम्पने । इत्येतेषामन्त्ये णः प्रयोक्तव्यः । दीर्घस्य ह्रस्वो भवति । सुणइ । (शृणोति) । हुणइ । (जुहोति) । जिणइ । (जयति) । लुणइ । (लुनाति) । धुणइ । (धुनाति) ।

## भावकर्म्मणोर्व्वश्च ॥ ५७ ॥

एषां भावकर्म्मणोरन्त्ये "व्व"-शब्द. प्रयोक्तव्यः । चकारात् णश्च । सुव्वइ—सुणिज्जइ । (श्रूयते) । हुव्वइ—हुणिज्जइ । (हूयते) । जिव्वइ—जिणिज्जइ । (जीयते) । लुव्वइ—लुणिज्जइ । (लूयते) । धुव्वइ—धुणिज्जइ । (धूयते) । *

## गमादीनां द्वित्वं वा ॥ ५८ ॥

गमादीनां धातूनां द्वित्वं वा भवति । गम्मइ—गमिज्जइ । (गम्यते) । रम्मइ—रमिज्जइ । (रम्यते) । हस्सइ—हसिज्जइ । (हस्यते) । †

## लिहेर्लिज्झः ॥ ५९ ॥

लिह आस्वादने । अस्य धातोर्लिज्झो भवति भावकर्म्मणोः । लिज्झइ । (लिह्यते) ।

## हृ-क्रोर्हीर-कीरौ ॥ ६० ॥

हृञ् हरणे । डु कृञ् करणे । अनयोर्हीर-कीरौ भवतो भावकर्म्मणोरर्थयोः । हीरइ । (ह्रियते) । कीरइ । (क्रियते) । ‡

* एषामिति ।—एषां श्रुप्रभृतीनां धातूनामित्यर्थ, भावे कर्म्मणि च वाच्ये अन्तस्थितस्थाने व्वकारप्रयोग' कार्य्यं । पत्ते,—चकारेण पूर्व्वसूत्रानुवृत्ती णकारश्च भवति । अतएवैषा भावकर्म्मणो' पदद्वय भवतीति तात्पर्य्यम् ।

† गमादीनामिति ।—एषां भावे कर्म्मणि च वाच्ये विकल्पेन द्वित्व भवति । पत्ते,—भावकर्म्मवाच्योक्तविधिज्जकार' स्यादिति तात्पर्य्यम् ।

‡ भावेति ।—भावकर्म्मणोरर्थयोः भावकर्म्मणोर्वाच्ययोरित्यर्थः ।

## ग्रहेर्दीर्घो वा॥ ६१ ॥

ग्रहेर्धातोः दीर्घो वा भवति भावकर्मणोरर्थयोः। गाह्जिइ—गह्णिज्जइ। (गृह्यते)।

## क्तेन दिण्णादयः ॥ ६२ ॥

दिण्ण इत्येवमादयः "क्त"-प्रत्ययेन सह निपात्यन्ते। डु दाञ् दाने।—दिण्णं। (दत्तम्)। रुदिर्।—रुण्ण। (रुदितम्)। त्रसी।—हित्थं। (त्रस्तम्)। दह।—दड्ढं। (दग्धम्)। रञ्जि।—रत्तं। (रक्तम्)। *

## खिदेर्विसूरः ॥ ६३ ॥

खिद दैन्ये। अस्य विसूरो भवति। विसूरइ। विरहेण विसूरइ बाला। (विरहेण खिद्यति बाला)। †

## क्रुधेर्जूरः ॥ ६४ ॥

क्रुध कोपे। अस्य जूरो भवति। जूरइ। (क्रुध्यति)।

## चर्चेश्चंपः ॥ ६५ ॥

चर्च अध्ययने। अस्य धातोश्चंपो भवति। चंपइ। (चर्चति)।

## त्रसेर्वज्जः ॥ ६६ ॥

त्रसी उद्वेगे। अस्य धातोः वज्जो भवति। वज्जइ। (त्रसति, त्रस्यति)।

---

* दिण्णेत्यादि।—इदन्तु निपातनसूत्रम्। सर्वाणि पदानि निपातनात् साधूनीति ज्ञेयम्।

† खिदेत्यादि।—खिदेरित्यादीनि पञ्च सूत्राणि सुगमानीति।

## मृजेर्लुभ-सुपौ ॥ ६७ ॥

मृजू शुद्धौ । अस्य धातोः "लुभ-सुप" इत्यादेशौ भवतः । लुभइ—सुपइ । (मार्ष्टि) ।

## बुड्ड-खुप्पौ मस्जेः ॥ ६८ ॥

टुमस्‌जो शुद्धौ । अस्य धातोः बुड्ड-खुप्पौ भवतः । बुड्डइ—खुप्पइ । (मज्जति) ।

## दृशेः पुलअ-णिअक्क-अवअक्खाः ॥ ६९ ॥

दृशिर् प्रेक्षणे । अस्य "पुलअ-णिअक्क-अवअक्खा" भवन्ति । पुलअइ—णिअक्कइ—अवअक्खइ । (पश्यति) ।

## शकेस्तर-वअ-तीराः ॥ ७० ॥

शक्लृ शक्तौ । अस्य धातोः "तर-वअ-तीर" इत्येत आदेशा भवन्ति । तरइ—वअइ—तीरइ । (शक्नोति) । *

## शेषाणामदन्तता ॥ ७१ ॥

शेषाणां लुप्तानुबन्धानामदन्तता भवति । भमइ । (भ्रमति) । चुवइ । (चुम्बति) । †

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ धात्वादेशो नाम अष्टमः परिच्छेदः ।

---

* शकेरिति ।—पक्षे "शकादीनां द्वित्वम्" (८।५२) इत्यनेन सूत्रेण अन्तस्थितवर्णस्य द्वित्वे कृते "सक्कइ" इत्येवमपि रूपमेकं स्यादिति तात्पर्य्यमुन्नेयम् ।

† शेषाणामिति ।—उल्लिखितेभ्यो धातुभ्योऽवशिष्टा ये धातवः, ते चेत् लुप्तानुबन्धा लुप्तः अनुबन्धो येषां ते तथोक्ताः, निरनुबन्धा इत्यर्थः, स्युरिति शेषः, तेषां धातूनामदन्तता अकारान्तता, अकारान्तधातुवत् कार्य्यं भवतीति तात्पर्य्यम् ।

## अथ नवमः परिच्छेदः ।

### निपाताः ॥ १ ॥

अधिकारोऽयम् । वक्ष्यमाणा निपातसंज्ञका वेदितव्याः । संस्कृतानुसारेण निपातकार्य्यं वक्तव्यम् । *

### हुं दान-पृच्छा-निर्द्धारणेषु ॥ २ ॥

"हुं" इत्ययं शब्दो दान-पृच्छा-निर्द्धारणेष्वर्थेषु निपातसंज्ञो भवति । दाने यथा ।—हुं गेण्ह अप्पणो जीअं । (हुं गृहाणात्मनो जीवम्) । पृच्छायाम् ।—हुं कहेहि साहुसु सब्भावं । (हुं कथय साधुषु सद्भावम्) । निर्द्धारणे ।—हुं हुवसु तुण्हिक्को । (हु भव तूष्णीकः) । †

### विअ-वेअ अवधारणे ॥ ३ ॥

"विअ-वेअ" इत्येताववधारणे निपातसञ्ज्ञौ भवतः । एवं विअ—एव वेअ । (एवमेव) । ‡

### ओ सूचना-पश्चात्ताप-विकल्पेषु ॥ ४ ॥

"ओ" इत्ययं शब्दः सूचना-पश्चात्ताप-विकल्पेषु निपातसंज्ञो भवति । ओ चिरअसि । (अहो चिरयसि) । गाथासु द्रष्टव्यः । §

---

* अधिकार इति ।—निपातसञ्ज्ञाऽधिकार इत्यर्थः । वक्ष्यमाणानि सूत्राणि निपातसंज्ञकानि ज्ञेयानि, सस्कृतशास्त्रानुसारेण निपातकार्य्यं भविष्यतीत्यर्थः ।

† हुमिति ।—दानादिष्वर्थेषु त्रिषु "हु"-शब्दस्य निपातसञ्ज्ञा ।

‡ विएति ।—एवशब्दस्य अर्थ एव विअ वेएति बोध्यम् ।

§ ओ इति ।—"ओ"-शब्दस्तु नाटकादौ गाथासु सङ्गीतेषु श्लोकेषु वा अन्वेष्टव्य इति ।

## इर-किर-किला अनिश्चिताख्याने ॥ ५ ॥

"इर-किर-किल" इत्येते शब्दा अनिश्चिताख्याने निपात-संज्ञका भवन्ति। पेक्ख इर तेण हदो। (प्रेक्षस्व किल तेन हतः)। अज्ज किर तेण ववसिओ। (अद्य किल तेन व्यवसितः)। अअ किल सिविणओ। (अयं किल स्वप्नः)। *

## हुं क्खु निश्चय-वितर्क-सम्भावनेषु ॥ ६ ॥

"हुं-क्खु" इत्येतौ निश्चय-वितर्क सम्भावनेषु निपातसंज्ञकौ भवतः। हु रक्खसो। (हु राक्षसः)। गरुओ क्खु भारो। (गुरुः खलु भारः)। †

## णवर: केवले ॥ ७ ॥

"णवर" इत्ययं शब्दः केवलेऽर्थे निपातसंज्ञो भवति। णवर अण्णं। (केवलमन्नम्)। ‡

## आनन्तर्य्ये णवरि ॥ ८ ॥

"णवरि" इत्ययं शब्द आनन्तर्य्ये निपातसंज्ञो भवति। णवरि। (अनन्तरम्)।

## किणो प्रश्ने ॥ ९ ॥

"किणो" इत्ययं शब्दः प्रश्ने निपातसंज्ञो भवति। किणो धुव्वसि। (किन्नु धुनोसि,—धूयसे)। किणो हससि। (किन्नु हससि)।

---

* इरेत्यादि।—अनिश्चिताख्याने अनिश्चितकथने। विषूदाहरणेषु निश्चयाभावो ज्ञायत इति।

† हुमिति।—हु रक्खसो इति निश्चय-वितर्कयोर्द्वयोरेवोदाहरणं ज्ञेयम्।

‡ णवरेति।—रत्नावल्यादौ अस्य प्रयोगो द्रष्टव्यः।

## अव्वो दुःख-सूचना-सम्भावनेषु ॥ १० ॥

"अव्वो" इत्ययं शब्दो दुःख सूचना-सम्भावनेषु निपातसंज्ञो भवति। दुःखे।—अव्वो कज्जलरसरंजिएहिं अच्छीहिं। (अहो कज्जलरसरञ्जिताभ्यामक्षिभ्याम्)। सूचनायाम्।—अव्वो अवरं विअ। (अहो अपरमिव)। सम्भावने।—अव्वो णमिव अत्तं। (अहो एनमिवात्तुम्)। *

## अलाहि निवारणे ॥ ११ ॥

"अलाहि" इत्ययं शब्दो निवारणे निपातसंज्ञो भवति। अलाहि कलहलेसेण। (अलं कलहलेशेन)। अलाहि कलह-बंधेण। (अलं कलहबन्धेन)। †

## अइ-वले सम्भाषणे ॥ १२ ॥

"अइ-वले" इत्येतौ शब्दौ सम्भाषणे निपातसंज्ञकौ भवतः। अइ मूलं पसूसइ। (अयि मूलं प्रशुष्यति)। वले किं कलेसि अबले। (अयि किं कलयसि अबले)। ‡

## णवि वैपरीत्ये ॥ १३ ॥

"णवि" इत्ययं शब्दो वैपरीत्ये निपातसंज्ञो भवति। णवि तह पहसइ बाला। (विपरीतं तथा प्रहसति बाला)।

* अव्वो इति।—विभिन्नोदाहरणैर्दुःखादयस्त्रयोऽर्था वेदितव्या इति।

† अलाहीति।—प्राकृतभाषायामल शब्दस्थाने अलाहीत्यादेशः सूच्यते।

‡ अइति।—वले इत्यय शब्दोऽपि अयिशब्दार्थकः सम्भाषणसूचकः।

## सू कुत्सायाम् ॥ १४ ॥

"सू" इत्ययं शब्दः कुत्सायां निपातसंज्ञो भवति। सू सिविणो। (धिक् स्वप्नः)। *

## रे अरे हिरे सम्भाषण-रतिकलहाक्षेपेषु ॥ १५ ॥

"रे-अरे-हिरे" इत्येते शब्दाः सम्भाषण-रतिकलहाक्षेपेषु निपातसंज्ञा भवन्ति यथासंख्यम। रे मा करेहि। (रे मा कुरु —कुरुष्व)। णाओसि अरे। (नागोऽसि अरे)। दिट्ठो सि हिरे। (दृष्टोऽसि अरे)। †

## म्मिव-मिव-विअ इवार्थे ॥ १६ ॥

"म्मिव मिव-विअ" इत्येते शब्दा इवार्थे निपातसंज्ञका भवन्ति। गअणं म्मिव,—गअण मिव,—गअणं विअ कसणं। (गगनमिव कृष्णम्)। ‡

## अज्ज आमन्त्रणे ॥ १७ ॥

"अज्ज" इत्ययं शब्द आमन्त्रणे निपात्यते। अज्ज महाणुहाव किं करेसि ? (अहो महानुभाव किं करोषि ?)। §

* सू इति।—प्राकृतप्रयोगे "सिविणो-सिविणओ" इति पाठद्वय दृश्यते। "सिविणो" इत्ययमेव पाठ समीचीन इति बोध्यम्।

† रे इत्यादि।—यथासंख्यमिति यथाक्रममित्यर्थ, अतएव सम्भाषणे—"रे", रतिकलहे—"अरे", आक्षेपे च—"हिरे" इति यथायथ प्रयोक्तव्यमिति भाव। संस्कृतभाषायां "हिरे"-शब्दो नास्ति।

‡ म्मिवेत्यादि।—इवार्थे त्रीणि पदानि स्युरित्यर्थ.।

§ अज्जेति।—आमन्त्रण सम्बोधनम्। तस्मिन्नर्थे अज्जेति पदं निपातनात् साधु, न तु "अद्य"-शब्दस्य अज्जेति बोध्यम्।

## शेषः संस्कृतात् ॥ १८ ॥

उक्तादन्यः शेषः। प्रत्यय-समास-तद्धित-लिङ्ग-वर्णादिविधिः शेषः संस्कृतादवगन्तव्यः। इह ग्रन्थविस्तरभयान्न दर्शितः। *

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ निपातसञ्ज्ञाविधिर्नाम नवमः परिच्छेदः।

---

# अथ दशमः परिच्छेदः।

## पैशाची ॥ १ ॥

पिशाचानां भाषा पैशाची। सा च लक्ष्य-लक्षणाभ्यां स्फुटी-क्रियते। *

## प्रकृतिः शौरसेनी ॥ २ ॥

अस्याः पैशाच्याः प्रकृतिः शौरसेनी। स्थितायां शौरसेन्यां पैशाचीलक्षणं प्रवर्त्तयितव्यम्। †

---

शेष इति।—प्रत्ययस्य समासस्य तद्धितस्य लिङ्गस्य वर्णस्य च ये विधयोऽवशिष्यन्ते, इह नोक्ता इति भावः, तेषां रूपाणि संस्कृताज्ज्ञेयानि, तानि तु संस्कृत-प्राकृतभाषयोस्तुल्यानीति तात्पर्य्यम्। केवलं ग्रन्थविस्तारभयेन न तानीह समुल्लिखितानि। संस्कृतभाषायां तानि द्रष्टव्यानि, चेत् प्राकृतभाषायां प्रयोजनं स्यात्, तदा संस्कृतवत् तेषां प्रयोगः कार्य्य इति निर्गलितार्थः।

---

* पैशाचीति।—पैशाची व्युत्पादयति,—पिशाचानां भाषेति। सा च पैशाची भाषा लक्ष्येण लक्षणेन च स्फुटीक्रियते विव्रियते, विशदरूपेण व्याख्यायत इत्यर्थः।

† प्रकृतिरिति।—शौरसेनी शूरसेनदेशीया भाषा अस्याः पैशाच्या भाषायाः प्रकृतिर्मूलं तदुत्पन्नेत्यर्थः। प्रकृतिं विवृणोति स्थितायामिति।—शौरसेन्यां भाषायां स्थितायां वर्त्तमानायां पैशाचीभाषालक्षणं प्रवर्त्तयितव्यं प्रचालनीयमित्यर्थः।

**वर्गाणां तृतीय-चतुर्थयोरयुजोरनाद्योराद्यौ ॥३॥**

वर्गाणां तृतीय-चतुर्थयोरयुक्तयोरनादौ वर्त्तमानयोः स्थाने आद्यौ प्रथम-द्वितीयौ भवतः। गकन। मेखो। राचा। णिच्छरो। बटिसं। दसबतनो। माथबो। गोपितो। केसपो। सरफसं। सलफो। (गमनम्। मेघः। राजा। निर्झरः। बड़िशम्। दशवदनः। माधवः। गोविन्दः। केशवः। सरभसम्। शलभः)। अयुजोरिति किम्?—सगामो। बग्घो। इत्यादि। (सग्रामः। व्याघ्र.)। अनादाविति किम्?—गमनम्। इत्यादि। (गमनम्)। *

**इवस्य पिवः ॥ ४ ॥**

"इव"-शब्दस्य स्थाने "पिव" इत्ययमादेशो भवति। कमलं पिव मुखं। (कमलमिव मुखम्)। †

**णो नः ॥ ५ ॥**

णकारस्य स्थाने "नकार" इत्ययमादेशो भवति। तलुनी। (तरुणी)।

---

* वर्गाणामिति।—वर्गाणा ककारादीना मकारान्ताना वर्णाना मध्ये असंयुक्तयो, तथा अनादौ वर्त्तमानयो. शेषमध्यस्थितयोरित्यर्थ., तृतीय-चतुर्थयो स्थाने प्रथम-द्वितीयौ वर्णौ यथाक्रम भवत। प्रयुक्तेषु उदाहरणेषु गकारादीना वर्गतृतीय-वर्णाना स्थाने ककारादीना प्रथमवर्णानामादेश', तथा घ कारादीना वर्गचतुर्थवर्णाना स्थाने खकारादीना वर्गद्वितीयवर्णानाम् आदेशो बोद्धव्याः। सङ्ग्रामादीना सयुक्त-वर्णतया आदेशो न। गमनमित्यादौ तु आदिस्थितवर्णत्वात् न प्रथमवर्णादेश।

† इवेत्यादि।—"इवस्य पिव" इत्याद्यारभ्य "ज्ज च" (१०।१२) इत्यन्त यावत यानि सूत्राणि, तेषाञ्च ये ये आदेशास्ते सर्वं एव सुगमाः, अतस्तेषा व्याख्या खलु नावश्यकीति।

**ष्टस्य सटः ॥ ६ ॥**

"ष्ट" इत्यस्य स्थाने "सट" इत्ययमादेशो भवति । कसटं मम वट्टइ । (कष्टं मम वर्त्तते)।

**स्नस्य सनः ॥ ७ ॥**

"स्न" इत्यस्य स्थाने "सन" इत्ययमादेशो भवति । सनानं । (स्नानम्) । सनेहो । (स्नेहः) ।

**र्यस्य रिअः ॥ ८ ॥**

"र्य" इत्यस्य स्थाने "रिअ" इत्ययमादेशो भवति । भारिआ । (भार्य्या) ।

**ज्ञस्य ञ्ञः ॥ ६ ॥**

"ज्ञ" इत्यस्य स्थाने "ञ्ञ" इत्ययमादेशो भवति । विञ्ञातो । (विज्ञातः) । सव्वञ्ञो । (सर्वज्ञः) ।

**कन्यायां न्यस्य ॥ १० ॥**

कन्याशब्दे न्यस्य स्थाने "ञ्ञ" इत्ययमादेशो भवति । कञ्ञा । (कन्या) ।

**ज्ज च ॥ ११ ॥**

"ज्ज"-शब्दस्य शौरसेनीसाधितस्य "च्च" इत्ययमादेशो भवति । कच्च । (कार्य्यम्) ।

**राज्ञो राचि टा-ङसि-ङस्-ङिषु वा ॥१२॥***

"राजन्"-शब्दस्य "टा-ङसि-ङस्-ङि" इत्येतेषु परतो "राचि" इत्ययमादेशो वा भवति । राचिना—रञ्ञा । राचिनो —रञ्ञो । राचिनि—रञ्ञि । (राज्ञा । राज्ञः । राज्ञि । राजनि) ।

---

*राजन्शब्दस्येति ।—टादिषु चतसृषु विभक्तिषु परवर्त्तिनीषु राजन्शब्द-

एतेष्विति किम्?—राचा। (राजा)। राचान। (राजानम्)। रञ्ञो। (राज्ञः)।

**त्वस्तूनं ॥ १३ ॥**

"क्त्वा"-प्रत्ययस्य स्थाने "तूनं" इत्ययमादेशो भवति। दातूनं। (दत्त्वा)। कातूनं। (कृत्वा)। घेत्तूनं। (गृहीत्वा)। *

**हृदयस्य हितअकं ॥ १४ ॥**

"हृदय"-शब्दस्य "हितअकं" निपात्यते। हितअकं हरसि मे तलुनि। (हृदयं हरसि मे तरुणि।)। †

इति वररुचिकृतप्राकृतप्रकाशस्य भामहविरचितायां वृत्तौ
पैशाचिको नाम दशमः परिच्छेदः।

---

## अथैकादशः परिच्छेदः।

**मागधी ॥ १ ॥**

मगधानां भाषा मागधी। लक्ष्य-लक्षणाभ्यां स्फुटीक्रियते।*

---

स्थाने विकल्पेन "राचि" इत्यादेशो भवति, एतद्भिन्नासु विभक्तिषु परतो नेति बोध्यम्।

घेत्तूनमिति।—"घेत् क्त्वा-तुमुन् तव्येषु" (८।१६) इत्यनेन घेदादेशः। पैशाचिकत्वादत्र थकारस्य स्थाने नकारादेश इति बोध्यम्।

हृदयस्येति।—हितअकमिति निपातनात् सिद्धं ज्ञेयम्।

---

* मागधीति।—मगधानां मगधजनपदवासिनां मगधदेशभवानां वा या भाषा सा मागधीत्युच्यते। अधुना लक्ष्येण लक्षणेन च सा विव्रियत इत्यर्थः।

प्रकृतिः शौरसेनी ॥ २ ॥

अस्या मागध्याः प्रकृतिः शौरसेनीति वेदितव्यम्। *

षसोः शः ॥ ३ ॥

षकार-सकारयोः स्थाने "शो" भवति। माशे। (माषः)। बिलाशे। (विलासः)।

जो यः ॥ ४ ॥

जकारस्य यकारो भवति। याअदे। (जायते)।

चवर्गस्य स्पष्टता तथोच्चारणः ॥ ५ ॥

चवर्गो यथा स्पष्टस्तथोच्चारणो भवति। पलिचए। (परिचयः)। गहिदच्छले। (गृहीतच्छलः)। बियले। (विजलः)। णिज्झले। (निर्झरः)।

हृदयस्य हडक्कः ॥ ६ ॥

हृदयस्य स्थाने "हडक्को" भवति। हडक्के आलले मम। (हृदये आदरो मम)।

र्य-र्जयोर्य्यः ॥ ७ ॥

र्यकार-र्जकारयोः स्थाने "य्यो" भवति। कय्ये। (कार्यम्)। दुय्यणे। (दुर्जनः)।

क्षस्य स्कः ॥ ८ ॥

क्षस्य स्थाने स्ककारो भवति। लस्कशे। (राक्षसः)। दस्के। (दक्षः)।

---

* प्रकृतिरिति।—शौरसेनी शूरसेनदेशीया भाषा, अस्या मागध्या मगधदेशीयाया भाषायाः, प्रकृति कारणमिति ज्ञातव्यमित्यर्थः। शौरसेन्या भाषाया मागधीभाषा जातेति तात्पर्य्यम्।

## अस्मदः सौ हके-हगे-अहके ॥ ९ ॥

अस्मदः स्थाने सौ परतो "हके-हगे-अहके" इत्येत आदेशा भवन्ति। हके—हगे—अहके भणामि। (अहं भणामि)। *

## अत इदेतौ लुक् च ॥ १० ॥

सावित्यनुवर्त्तते। अकारान्ताच्छब्दात् सौ परत इकारैकारौ भवतः। पक्षे लोपश्च। एशि लाआ। (एष राजा)। एशे पुलिशे—एश पुलिश। (एष पुरुषः)। †

## क्तान्तादुश्च ॥ ११ ॥

क्तप्रत्ययान्ताच्छब्दात् सौ परत उकारश्च भवति। चकारात् इदेतौ लुक् च। हशिदु—हशिदि—हशिदे—हशिद। (हसितः)। ‡

## ङसो हो वा दीर्घत्वञ्च ॥ १२ ॥

ङसः षष्ठ्येकवचनस्य स्थाने हकारादेशो वा भवति। तत्संयोगे च दीर्घत्वम्। पुलिशाह धणे,—पुलिशश्श धणे। (पुरुषस्य धनम्)। §

---

* अस्मद इति।—अस्मच्छब्दस्य प्रथमाविभक्तेरेकवचने त्रय आदेशा भवन्ति।

† अत इति।—अकारान्ताच्छब्दात् "सु"-विभक्तौ परवर्त्तिन्यामिकारस्य एकारस्य तयोर्लोपस्येति त्रिविध कार्य्यं भवतीत्यर्थ.

‡ क्तान्तादिति।—"क्त"-प्रत्ययनिष्पन्नाच्छब्दात् "सु"-विभक्तौ परत उकारस्य इकारस्य एकारस्य एतेषां त्रयाणां लोपस्येत्थं पदचतुष्टयं भवतीति बोध्यम्।

§ ङस इति।—अत्रापि अदन्तत्वं ग्राह्यम्। अकारान्ताच्छब्दात् षष्ठीविभक्तेरेकवचनस्य स्थाने विकल्पेन हकारादेशो भवति। तत्संयोगे तस्य हकारस्य संयोगे सम्बन्धे सति, दीर्घत्वं पूर्व्वस्वरस्येति शेष इति तात्पर्य्यम्।

## अदीर्घः सम्बुद्धौ ॥ १३ ॥ *

अदन्तादित्येव। अदन्ताच्छब्दादकारो दीर्घो भवति सम्बुद्धौ। पुलिशा आगच्छ। (पुरुष। आगच्छ)। माणुशा आगच्छ। (मानुष। आगच्छ)। सम्बुद्धाविति किम्?—बम्हणश्श धणे। (ब्राह्मणस्य धनम्)।

## चिट्ठस्य चिष्ठः ॥ १४ ॥

चिट्ठस्य स्थाने "चिष्ठ" इत्ययमादेशो भवति। पुलिशे चिष्ठदि। (पुरुषस्तिष्ठति)।

## कृञ्मृङ्गमां क्तस्य डः ॥ १५ ॥

डु कृञ् करणे। मृङ् प्राणत्यागे। गमॢ गतौ। एतेषां क्तप्रत्ययस्य स्थाने डकारो भवति। कडे। मडे। गडे। (कृतः। मृतः। गतः)। †

## क्त्वो दाणिः ॥ १६ ॥

"क्त्वा"-प्रत्ययस्य स्थाने "दाणि" इत्ययमादेशो भवति। शहिदाणि गडे। (सोढ्वा गतः)। करिदाणि आगडे। (कृत्वा आगतः)। ‡

---

* अदीर्घ इति।—"अत इदेतौ लुक् च" (११।१०) इति सूत्रादन्तोऽनुवर्त्तत इत्यर्थः। सम्बोधनविभक्तौ अकारान्तस्य शब्दस्य दीर्घो भवति। अस्य अकारान्तस्य शब्दस्य दीर्घ इति "अ"-दीर्घ इति भाव, न तु दीर्घाभाव इत्याशय। तथात्वे स्ववचन-विरोध इति बोध्यम्।

† कृञित्यादि।—कृञादीनां त्रयाणां धातूनां "क्त"-प्रत्ययस्य स्थाने डकारो भवति, न त्वन्यप्रत्ययस्येति तात्पर्य्यम्।

‡ क्त्व इति।—मागध्यां भाषायां "क्त्वा"-प्रत्ययस्थाने दाण्यादेशो भवति। गड इति।—"कृञ्-मृङ्-गमां क्तस्य डः" (११।१५) इत्यनेन क्तस्थाने डकारः।

**शृगालस्य शिआला-शिआले-शिआलका: ॥१७॥**

शृगालशब्दस्य स्थाने शिआलादय आदेशा भवन्ति। शिआला आअच्छदि। शिआले आअच्छदि। शिआलके आअ-च्छदि। (शृगाल आगच्छति)।। *

इति वररुचिकृते प्राकृतप्रकाशे भामहविरचितायां मनोरमायां वृत्तौ मागध्याख्य एकादशः परिच्छेदः।

---

## अथ द्वादशः परिच्छेदः। †

**शौरसेनी ॥ १ ॥**

शूरसेनानां भाषा शौरसेनी। सा च लक्ष्य-लक्षणाभ्यां स्फुटीक्रियते।

**प्रकृतिः संस्कृतम् ॥ २ ॥**

अस्याः शौरसेन्याः प्रकृतिः संस्कृतमिति बोध्यम्।

**अनादावयुजोस्तथयोर्दधौ ॥ ३ ॥**

अनादौ वर्त्तमानयोरयुक्तयोस्तकार-थकारयोः स्थाने "द-ध" इत्यादेशौ भवतः। पदावो। (प्रतापः)। जधा। (यथा)। अयुजोरिति किम्?—कच्चं। (कृत्यम्)। मिच्छा। (मिथ्या)। अनादाविति किम्?—तलुणी। (तरुणी)।

---

* शृगालस्येति।—"शृगाल"-शब्दस्थाने त्रय आदेशा भवन्तीत्यर्थः।

---

† द्वादशपरिच्छेदस्य भामहवृत्तिर्न दृश्यते तावत्, अतः शिष्यावबोधार्थं सूत्राण्येतानि यथामति व्याख्यायन्ते।

व्यापृतेः डः ॥ ४ ॥

व्यापृतशब्दस्य तकारस्थाने "ड" इत्यादेशो भवति। वावुडो। (व्यापृतः)।

पुत्रेऽपि क्वचित् ॥ ५ ॥

क्वचित् पुत्रशब्दस्य तकारस्य स्थानेऽपि डकारादेशो भवति। पुड्डो—पुत्तो। (पुत्रः)।

इः गृध्रसमेषु ॥ ६ ॥

गृध्रतुल्येषु शब्देषु आदिस्थितस्य ऋकारस्य स्थाने इकारादेशो भवति। गिद्धो। (गृध्रः)। किच्छं। (कृच्छ्रम्)।

ब्रह्मण्य-विज्ञ-यज्ञ-कन्यकानां ण्यज्ञन्यानां ञ्ञो वा ॥ ७ ॥

"ब्रह्मण्य-विज्ञ-यज्ञ-कन्यका" इत्येतेषां ण्यकारस्य ज्ञकारस्य न्यकारस्य स्थाने "ञ्ञ" इत्यादेशो भवति वा। बम्हञ्ञ—बम्हस्स। (ब्रह्मण्यम्)। बिञ्ञो—बिज्जो। (विज्ञः)। जञ्ञो—जण्णो। (यज्ञः)। कञ्ञआ—कण्णआ। (कन्यका)।

सर्वज्ञेङ्गितज्ञयोर्णः ॥ ८ ॥

"सर्वज्ञ"-"इङ्गितज्ञ" इत्येतयोः ज्ञकारस्य स्थाने णकारादेशो भवति। सव्वण्णो। (सर्वज्ञः)। इङ्गिदण्णो। (इङ्गितज्ञः)।

क्त्व इअः ॥ ९ ॥

"क्त्वा"-प्रत्ययस्य स्थाने "इअ" इत्यादेशो भवति। हसिअ। (हसित्वा)।

कृगमोर्दुअः ॥ १० ॥

डुकृञ् करणे। गम्लृ गतौ। इत्यनयोः "क्त्वा"-प्रत्ययस्य

स्थाने "दुअ" इत्यादेशो भवति । पूर्वसूत्रस्यापवादः । कदुअ । (कृत्वा) । गदुअ । (गत्वा) ।

## णिर्जस्शसोर्वा क्लीवे स्वरदीर्घश्च ॥ ११ ॥

क्लीवलिङ्गे जस्शसोः स्थाने "णि" इत्यादेशो भवति वा । तत्संयोगे पूर्वस्वरस्य दीर्घो भवति । वणाणि । दहीणि । पक्षे—वणाइं । दहीइ । ( वनानि । दधीनि) ।

## भो भुवस्तिङि ॥ १२ ॥

तिङि भूधातोः स्थाने "भो" इत्यादेशो भवति । भोइ । (भवति) ।

## न ऌटि ॥ १३ ॥

पूर्वस्यापवादः । ऌटि भूधातोः स्थाने "भो" इत्यादेशो न भवति । भविस्सइ । (भविष्यति) ।

## ददातेर्दे दइस्स ऌटि ॥ १४ ॥

तिङि "दा"-धातोः स्थाने "दे" इत्यादेशो भवति । ऌटि पुनस्तस्य "दइस्स" इत्यादेशो भवति । देइ । (ददाति) । देउ । (ददातु) । ऌटि यथा,—दइस्सइ । (दास्यति) ।

## डुकृञः करः ॥ १५ ॥

तिङि "कृ"-धातोः स्थाने "कर" इत्यादेशो भवति । करइ । (करोति) ।

## स्थश्चिट्ठः ॥ १६ ॥

तिङि स्थाधातोः स्थाने "चिट्ठ" इत्ययमादेशो भवति । चिट्ठइ । (तिष्ठति) ।

## स्मरतेः सुमरः ॥ १७ ॥

तिङि "स्मृ"-धातोः स्थाने "सुमर" इत्ययमादेशो भवति। सुमरइ। (स्मरति)।

## दृशेः पेक्खः ॥ १८ ॥

तिङि "दृश्"-धातोः स्थाने "पेक्ख" इत्यादेशो भवति। पेक्खइ। (पश्यति)।

## अस्तेरच्छः ॥ १९ ॥

तिङि "अस्"-धातोः स्थाने "अच्छ" इत्ययमादेशो भवति। अच्छदु। (अस्तु)।

## तिपात्थि ॥ २० ॥

तिपा सह अस्तेः "अत्थि" इत्ययमादेशो भवति।

## भविष्यति मिपा स्सं वा स्वरदीर्घत्वञ्च ॥२१॥

भविष्यत्काले मिपा सह "स्स" इत्ययमादेशो भवति वा। तत्संयोगे पूर्वस्वरस्य दीर्घो भवति। हसीस्सं—हसिस्सामि। (हसिष्यामि)।

## स्त्रियामित्थी ॥ २२ ॥

स्त्रीशब्दे "इत्थी" इत्यादेशो भवति। इत्थी आअच्छदि। (स्त्री आगच्छति)।

## एवस्य जेव्व ॥ २३ ॥

"एव"-शब्दस्य स्थाने "जेव्व" इत्ययमादेशो भवति। कदुअ जेव्व। (कृत्वेव)।

## इवस्य विश्र ॥ २४ ॥

"इव"-शब्दस्य स्थाने "विश्र" इत्ययमादेशो भवति। चंदो विश्र। (चन्द्र इव) ।

## अस्मदो जसा वश्रं च ॥ २५ ॥

अस्मच्छब्दस्य जसा सह "वश्रं" इत्ययमादेशो भवति। चकारात् "अम्हे" इत्यादेशश्च भवति। वश्रं आगदा। पक्षे,—अम्हे आश्रदा। (वयमागताः)।

## सर्वनाम्नां ङेः स्सिं वा ॥ २६ ॥

सर्वनामवाचकानां शब्दानां "ङि"-विभक्तिस्थाने "स्सिं" इत्ययमादेशो वा भवति। सव्वस्सिं। पक्षे,—सव्वम्मि—सव्वत्थ। (सर्वस्मिन्)।

## धातोर्भावकर्त्तृकर्म्मसु परस्मैपदम् ॥ २७ ॥

धातोर्भावादिषु त्रिषु वाच्येषु परस्मैपदं भवति। गमिज्जइ—गम्मइ। (गच्छति, गम्यते)। पढइ। (पठति, पठते)। जिव्वइ—जिणिज्जइ। (जीयते)।

## अनन्त्य एच्च ॥ २८ ॥

धातोर्यो वर्णः अन्तस्थितो न भवति तस्मिन् एकारादेशो भवति वा।

## मिपो लोटि च ॥ २९ ॥

धातोर्मिपः स्थाने लोड्विभक्तौ च एकारादेशो भवति।

## आश्चर्य्यस्याच्छरिश्रं ॥ ३० ॥

"आश्चर्य"-शब्दस्य स्थाने "अच्छरिश्रं" इत्यादेशो भवति।

## प्रकृत्या दोलादण्डदशनेषु ॥ ३१ ॥

दोलादिषु शब्देषु प्रकृतिवद्भावो भवति । "दोलादण्डदशनेषु"(२।३५) इत्यादिना प्राप्तं सूत्रोक्तशब्दानामादिवर्णस्य डत्वं न स्यादिति भावः ।

## शेषं महाराष्ट्रीवत् ॥ ३२ ॥

उक्तादन्यः शेषः । प्रत्ययादिविधिः शेषः महाराष्ट्र्या वेदितव्यः । (पैशाची-मागधी-शौरसेनीभाषाणां दशमैकादश-द्वादशपरिच्छेदेष्वेव अन्तर्गतत्वात् तदितरे परिच्छेदाः महाराष्ट्रीति ज्ञेया) ।

इति वररुचिकृते प्राकृतप्रकाशे शौरसेनीलक्षणं नाम द्वादशः परिच्छेदः ।

समाप्तः ।

—०○—

# प्रकीर्णांशः ।

[ केषुचित् पुस्तकेषु एतान्यतिरिक्तसूत्राणि दृश्यन्ते । एतेषु बहूनामेव वररुचि-कृतत्वे सन्दिग्धतया अत्र पृथक् समावेशः कृतः ] ।

## स्मरस्मेरयोर्मश्च ॥ १ ॥

अनयोर्मस्य लोपः स्यात् । सरो । सेरो । चकाराद् घस्मरादौ लोपः । घसरो इत्यादि ।

## र्धग्धयोष्ठः ॥ २ ॥

"र्ध"-"ग्ध" इत्येतयोः स्थाने ठकारादेशः स्यात् । बड्ढइ । (वर्धते) । बिअड्ढो । (विदग्धः) । इत्यादि ।

## संयोगपूर्वो ह्रस्वः ॥ ३ ॥

सर्वत्र संयोगपूर्वो ह्रस्वो भवति । कित्ती । (कीर्त्तिः) । णिक्कंतो । (निष्क्रान्तः) । णत्थि । (नास्ति) । इत्यादि । *

## दीर्घादिषु वा ॥ ४ ॥

दीर्घादिषु शब्देष्वादौ ह्रस्वो वा स्यात् । दिग्घो—दीहो । (दीर्घः) । बहो—बाहो । (बाह्यः) । इत्यादि ।

---

* संयोगेत्यादि ।—सर्वत्र सर्वस्मिन् स्थले, संयोगपूर्वं संयोगेन पूर्वः, ["पूर्वसदृश-वर—" (२।१।३१ पा०) इत्यादिना तृतीयातत्पुरुषः, संयोगात् पूर्वः पञ्चमीतत्पुरुषो वा] संयुक्तवर्णस्य पूर्ववर्त्ती वर्ण इत्यर्थः, ह्रस्वो भवति । संयोगः पूर्वो यस्य इति बहुव्रीहौ तु नैवार्थसङ्गतिः स्यादिति सुधीभिर्विभाव्यम् ।

## इत्र ल्यपश्च ॥ ५ ॥

"ल्यप्"-प्रत्ययस्य इअ आदेशः स्यात् । चकारात् "क्त्वा"-प्रत्ययस्यापि । विहसिअ । (विहस्य) । पढ़िअ । (पठित्वा) । सुमरिअ । (स्मृत्वा) । करिअ । (कृत्वा) ।

## क्त्वोऽपि दुअ ॥ ६ ॥

"क्त्वा"-प्रत्ययस्यापि "दुअ"-आदेशो भवति । गदुअ । (गत्वा) । कदुअ । (कृत्वा) ।

## भवद्भगवतोरात्वं ॥ ७ ॥

भवद्भगवच्छब्दयोरात्वं विधीयते । भवा, भअवा कुणइ । (भवान्, भगवान् करोति) । सम्बोधने ।—हे भअं । (हे भवन्) । हे भअवं । (हे भगवन्) ।

## जस्शष्टां दा ॥ ८ ॥

एषां दा स्यात् । भवदा । (भवन्तः । भवतः । भवता) । *

## ङस्ङ्स्योर्दो ॥ ९ ॥

भवदो । भवदो । (भवतः) । एवं भगवत् । †

## एवं सर्वेष्वताधिकारादेशेषु ॥ १० ॥ ‡

अकारादीनां परे अताधिकारादेशो भवन्ति । अग्गिस्स । (अग्नेः) । वाउस्स । (वायोः) । अग्गीदो । (अग्नेः) । वाऊदो । (वायोः) । अग्गिम्मि । (अग्नौ) । वाउम्मि । (वायौ) ।

---

* एषामिति ।—"जस्-शस्-टा" इत्येषां स्थाने दादेशः स्यात्, भगवच्छब्दस्यापि एव "दा" इत्यादेशो भवति ।

† एवमिति ।—एवमित्थं भगवच्छब्दस्यापि ङस्विभक्तौ ङसिविभक्तौ च "दो" इत्यादेशो भवतीति ज्ञेयम् ।

‡ एवमिति ।—एवमनेन प्रकारेण, अकारान्तशब्दाधिकारे ये आदेशा उक्ताः,

## तत्समास्ते येषु न विकार: ॥ ११ ॥

उक्तलक्षणवशाद् येषु येषु विकारो न दृश्यते, ते ते शब्दा: प्राकृतसमा बोद्धव्या: । यथा—पुरन्दर इत्यादि । *

## ल्यप्कारे हीअ ॥ १२ ॥

भूते काले "ल्यप्"-प्रत्ययस्य "हीअ" इत्यादेशो भवति। होहीअ । (भूय) । पढहीअ । (पठ्य) । हसहीअ । (हस्य) । †

## हेर्हिम: ॥ १३ ॥

हि तापे। अस्य धातोर्हिमादेशो भवति। हिमइ। (हिनोति) । ‡

## जयतेर्वा ॥ १४ ॥

"जि" इत्यस्य वा णकारो भवति। जिणइ—जिअइ। (जयति) ।

## नोपसर्गस्य ॥ १५ ॥ §

"स्मृ" इत्येतस्य सोपसर्गस्य भर-सुमरौ न स्याताम् । पस्सरइ। (प्रस्मरति)। विस्सरइ। (विस्मरति)। अणुस्सरइ। (अनुस्मरति)। अहिस्सरइ। (अभिस्मरति)।

---

तेषु सर्वेषु प्रत्यया भवन्ति । अतएव इकारान्तानामुकारान्ताना शब्दानामकारान्तानां शब्दानामिव आदेशा ज्ञेया इति तात्पर्य्यम् ।

* तत्समा इति।—येषु शब्देषु विकार, परिवर्त्तनं नास्ति, ते सर्वे शब्दा: प्राकृतशब्दतुल्या ज्ञेया इत्यर्थ: ।

† भूत इति।—"होहीअ" इत्यादिषु उपसर्गयोगं विनाऽपि ल्यप्प्रत्ययो दर्शित: केवलं शिष्यव्युत्पादनार्थमिति ।

‡ हीति।—तापार्थकस्य हिधातो: प्रयोगो नैव प्रायेण दृश्यते ।

§ नोपेति।—भर-सुमरावित्यादेशविधानादेव स्मधातुर्गृह्यत इत्यर्थ: ।

**खिदेर्जूर-विसूरौ ॥ १६ ॥**

खिद दैन्ये। अस्य जूर-विसूरौ भवतः। जूरइ—विसूरइ। (खिद्यते)।

**राजेरेहः ॥ १७ ॥**

राजृ दीप्तौ। अस्य धातो रेहादेशो भवति। रेहइ। (राजति)।

**इषेर्महः ॥ १८ ॥**

इषु इच्छायाम्। अस्य धातोर्महादेशो भवति। महइ। (इच्छति)।

**व्यधेर्विंभः ॥ १९ ॥**

व्यध ताड़ने। अस्य धातोर्विंभादेशो भवति। विंभइ। (विध्यति)।

**अदेश्चरखः ॥ २० ॥**

अद भक्षणे। अस्य धातोश्चरखादेशो भवति। चरखइ। (अत्ति)। *

**दा-धा-नी-डीङामेत्वं कर्त्तरि ॥ २१ ॥**

एषां कर्त्तरि एत्वं स्यात्। देइ। धेइ। णेइ। उड्डेइ। (ददाति। दधाति। नयति। उड्डीयते)। †

---

* चरखईति यदुदाहरण वृत्तिकृताऽच दर्शितं, तत्र स्खलितमस्तीति वयमुत्प्रेक्षामहे।

† देत्यादि।—सूत्रे कर्त्तरीति, ग्रहणात् कर्म्मणि तु एत्व प्रतिषिध्यत इति तात्पर्य्यमुन्नेयम्।

## कथेर्हः ॥ २२ ॥

कथ वाक्यप्रबन्धे। अस्य धातोस्थकारस्य हकारो भवति। कहइ। (कथयति)।

## कष्टेष्टः ॥ २३ ॥

कष्ट विपाके। अस्य धातोरन्त्यस्य टत्वं भवति। कटइ। (कष्टयति)। *

## वचवदोश्च ॥ २४ ॥

एतयोरन्त्यस्य द्वित्वं वा स्यात्। चकारादोत्वञ्च। बोच्चइ—बोचइ। (वक्ति)। बोल्लइ—बोलइ। (वदति)। "वदो दो लः" इति लत्वम्। †

## विकरणानामनियमः ॥ २५ ॥

विकरणानां शब्दानामनियमो भवति। होज्जइ। (भूयते)। हुविज्जइ। (ह्वयते)। हणिज्जइ। (हन्यते)। हम्मइ। (हन्यते)। वेत्थइ। (विद्यते)। घत्थइ। (गृह्यते)। कीरइ। (क्रियते)। इत्यादि। ‡

## उपमायां विअव्वौ ॥ २६ ॥

उपमायां गम्यमानायां "विअ"-"व्व" इत्येतावादेशौ भवतः। वच्छो विअ। (वृक्ष इव)। अग्गीव्व। (अग्निरिव)।

---

* कष्टेति।—अयं चौरादिक इति बोध्यम्।

† बोल्लईति।—द्वित्वे ओत्वे लत्वे च कृते बोल्लईति पदं सिद्धम्।

‡ विकरणानामिति।—प्रकृतेः परं विधीयमानः निरर्थक शबादिर्विकरणसंज्ञः स्यात्।

## इतिशब्दस्य पदान्ते त्ति ॥ २७ ॥

पदान्ते "इति"-शब्दस्य स्थाने "त्ति" इत्यादेशो भवति। कमलं बिअ मुहं त्ति। (कमलमिव मुखमिति)।

## उ क्षेपविस्मयसूचनासु ॥ २८ ॥

क्षेपाद्यर्थेषु "उ" इत्यादेशो भवति।

## मनागर्थे मणं ॥ २९ ॥

मनागर्थे "मणं" इत्यादेशो भवति। मणं सुहं। (मनाक् सुखम्)।

## हे भो आमन्त्रणे ॥ ३० ॥

आमन्त्रणे "हे"-"भो" इत्यादेशौ भवतः। हे बच्छो। (हे वृक्षः)। भो वाउ। (भो वायो)।

## आम् स्वीकृतौ ॥ ३१ ॥

स्वीकारार्थे "आम्"-शब्दः प्रयुज्यते।

## झटितिशब्दे झत्ति ॥ ३२ ॥

"झटिति"-शब्दे "झत्ति" इत्ययमादेशो भवति। झत्ति घरं पविस। (झटिति गृहं प्रविश)।

## दाहिणो दक्खिणो वा ॥ ३३ ॥

"दक्षिण"-शब्दे "दाहिण" इत्यादेशो भवति वा। दाहिणो पअणो—दक्खिणो पअणो। (दक्षिणः पवनः)।

## अप्यर्थे बिपी पदान्ते ॥ ३४ ॥

पदावसाने अप्यर्थे बिपीति प्रयुज्यते।

तंस तिर्य्यगर्थे ॥ ३५ ॥

तिर्य्यगर्थे तंसेति प्रयुज्यते। पच्छिणा तंस गमिज्जइ। (पच्छिणा तिर्य्यक् गम्यते)। *

शनैः सणिअं ॥ ३६ ॥

"शनैः"-शब्दस्थाने "सणिअं" इत्यादेशो भवति। सणिअं आअच्छदि बाला। (शनैरागच्छति बाला)।

हित्थं व्रीड़ित-भीतयोः ॥ ३७ ॥

अनयोरर्थयोः हित्थमिति प्रयुज्यते।

हुत्त-पराहुत्तावभिमुख-पराङ्मुखयोः ॥३८॥

अनयोरर्थयोर्यथासङ्ख्यं "हुत्त"-"पराहुत्त" इत्येतौ भवतः।

वाहिरं वहिः ॥ ३९ ॥

"वहिः"-शब्दस्थाने "बाहिर" इत्ययमादेशो भवति।

उण पुनः ॥ ४० ॥

"पुनः"-शब्दस्थाने उणेति आदेशो भवति। "मम उण मअणो दिबा बि रत्तिं बि।" इति शकुन्तला।

अंतो अन्तरर्थे ॥ ४१ ॥

अन्तरर्थे गम्यमाने "अंतो" इति प्रयुज्यते। सो घरांतो चिट्ठइ। (स गृहान्तस्तिष्ठति)।

इह इध: क्वचिद्वक्तव्यम् ॥ ४२ ॥

क्वचित् शिष्टप्रयोगे इहः स्थाने इधादेशः स्यात्। इध। (इह)।

---

* तंसेति।—तिर्य्यगर्थो वक्रार्थ इति।

**एवमेतदोरेव्वं णेदं ॥ ४३ ॥**

एवमेतदोः स्थाने यथाक्रमं "एव्वं"-"णेदं" निपात्येते ।

**क्त्वादूणः क्वचित् ॥ ४४ ॥**

क्वचित् क्त्वाप्रत्ययस्य स्थाने "दूणः" इत्यादेशः स्यात् । करिदूण, अन्यत्र करिअ (कृत्वा) ।

**तस्मात् ता ॥ ४५ ॥**

निपाताधिकारात् तस्मात् इत्यस्य स्थाने "ता" इत्येवं पदं भवति । ता गच्छम्ह । (तस्मात् गच्छामः) ।

**इदानीं दाणिं निपातो वक्तव्यः ॥ ४६ ॥**

इदानीमित्यस्य स्थाने "दाणिं" इति पदं निपात्यते ।

---

[ वक्ष्यमाणानि पाठान्तरीयसूत्राणि अधः सन्निवेश्यन्ते ] ।—

**आल्विल्लोल्लालवंतमंतेत्तेरमणा मतोः ॥ १ ॥**

"आलु-इल्ल-उल्ल-आल-वत-मंत-त्तेर-मण" इत्येते आदेशाः मतोः (मतुपः) स्थाने भवन्ति । (४।२५) ।

क्वचिदामतुपोऽन्त्यस्य मतो * त्वा दृश्यते क्वचित् ।

हणुमा । हणुमतो । हणुम (त्वो), हणुमत्वा । (हनुमान्) ।

इल्लालावपरे प्रायः शैषिकेषु प्रयुज्यते ॥

पुरिल्लं । (पुरोभव) । अप्पाल, अप्पणुल्लं । (आत्मीय) ।

---

* "मतो" इति शब्दः पश्चात् "मत्तो" इत्येवरूपेण परिवर्त्तितोऽभूत् ।

परिमाणे किमादिभ्यो भवन्ति एद्दहादयः ।

एद्दहो । एत्तिअ । (इयत्) । जेत्तिअं । जेद्दहं । (यावत्) । तेत्तोअं । तेद्दहं । (तावत्) । कित्तिलं । कित्तिअं । केद्दहं (कियत्) ।

कृत्वसो हुत्वमित्यन्ये देशोशब्दः स इष्यते ॥

सतो हुत्वं । (शतकृत्वः) । सहस्सहुत्तं । (सहस्रकृत्वः) ।

## जातौ वा स्वार्थिकः कः ॥ ॥ २ ॥

जातौ स्वार्थे ककारः प्रयोक्तव्यः ।

## यत्तदेतदोऽतोरित्तिअ एतल्लुक् च ॥ ३ ॥

एभ्यः परस्य डावादेरतः परिमाणार्थस्य "इत्तिअ" इत्यादेशो भवति । एतदो लुक् च । जित्तिअं । (यावत्) । तित्तिअं । (तावत्) । इत्तिअं । (एतावत्) ।

## इदं किमश्च डेत्तिअ-डित्तिल-डेद्दहाः ॥ ४ ॥

इदंकिंभ्यां यत्तदेतद्भ्यश्च परस्यातो डावतोर्वा डित "एत्तिअ-इत्तिल-एत्तद" इत्यादेशा भवन्ति । एतल्लुक् च । एत्तिअं-एत्तिलं-एद्दहं । (इयत्) । केत्तिअं-कित्तिलं-केद्दहं । (कियत्) ।

## डिल्लडुल्लौ भवे ॥ ५ ॥

भवेऽर्थे नाम्नः परौ "इल्ल"-"उल्ल" इत्येतौ डितौ प्रत्ययौ भवतः । पुरिल्लं । (पुरोभवम्) । अप्पुल्लं । (आत्मीयम्) ।

## स्वार्थे कश्च वा ॥ ६ ॥

स्वार्थे कश्चकारादिल्लोल्लौ डितौ प्रत्ययौ वा भवतः ।

# प्राकृतप्रकाश-परिशिष्टम् ।

—००—

## अकारादिक्रमेण संस्कृतशब्देभ्य उत्पद्यमानाः कियन्तः प्राकृतशब्दाः प्रदर्श्यन्ते ।

| संस्कृतम् । | | प्राकृतम् । |
|---|---|---|
| | **अकारादयः ।** | |
| अङ्कुशं | .. | अंकुसो । |
| अङ्कोठः | . | अंकोल्लो । |
| अर्च्चं | ... | अच्छं । |
| अच्चि | .. | अच्छी—अच्छं । |
| अपसारितं | ... | ओसारिअं—अवसारिअं । |
| अवहासः | .. | ओहासो—अवहासो । |
| अभिमन्युः | ... | अभिमज्जू । |
| अर्कः | ... | अक्को । |
| अर्घः | ... | अग्घो । |
| अर्हः | ... | अरिहो । |
| अलीकं | ... | अलिअं । |
| अश्रु | ... | अंसो । |
| अस्थि | .. | अट्ठी । |
| | **आकारादयः ।** | |
| आकृतिः | | आउदी । |
| आज्ञप्तिः | ... | आणत्ती । |
| आज्ञा | ... | आणा । |

| संस्कृतम् । | | प्राकृतम् । |
|---|---|---|
| आत्मा | ... | अप्पा । |
| आदरः | ... | आदरो । |
| आपीड़ः | ... | आमेलो । |
| आम्रं | .. | अबं । |
| आर्त्तः | | अत्तो । |
| आर्द्रं | ... | अल्लं—अद्दं । |
| आवर्त्तः | ... | आवत्तो । |
| आश्चर्य्यं | ... | अच्छेरं—अच्चरिअं |
| आह्लादः | ... | अल्हादो । |
| | **इकारादयः ।** | |
| इक्षुः | ... | उच्छू । |
| इङ्गितज्ञः | .. | इंगिअज्ञो । |
| इदानी | .. | दाणिं । |
| | **ईकारादयः ।** | |
| ईदृशः | | एरिसो । |
| ईश्वरः | .. | इस्सरो—ईसरो । |
| | **उकारादयः ।** | |
| उत्तरीयं | ... | उत्तरिज्जं । |
| उत्पलं | ... | उप्पलं । |
| उत्सवः | ... | उस्सवो |

| संस्कृतम् । | | प्राकृतम् । |
|---|---|---|
| उत्सुकः | ... | उस्सुओ । |
| उदुम्बरं | | उंबरं । |
| उपरि | ... | अवरि । |
| उपसर्गः | . | उपसग्गो । |
| उलूखलं | .. | ओक्खलं—उलूहलं । |
| उल्का | ... | उक्का । |
| उष्मन् | ... | उम्हा । |
| | ऋकारादयः । | |
| ऋजुः | ... | उज्जुओ । |
| ऋणं | ... | रिणं । |
| ऋतुः | ... | उदू । |
| ऋद्धः | ... | रिद्धो । |
| ऋषिः | ... | इसी । |
| | एकारादयः । | |
| एकं | ... | एक्कं—एअं । |
| एकदा | ... | एक्कइआ—एगदा । |
| एतावत् | ... | इत्तिअं । |
| एवं | | एव । |
| | ऐकारादयः । | |
| ऐरावतः | | एरावणो । |
| | औकारादयः । | |
| औषधं | ... | ओसढं । |
| | ककारादयः । | |
| कठोरं | .. | कढोरं । |
| कतमः | ... | कद्दसे । |
| कदम्बः | ... | कलंबो । |
| कनकं | ... | कणअं । |

| संस्कृतम् | | प्राकृतम् । |
|---|---|---|
| कबन्धः | | कमंधो । |
| करेणुः | . | कणेरू । |
| कपिः | .. | कई । |
| किरातः | ... | चिलादो । |
| कीदृशः | | केरिसो । |
| कुक्षिः | .. | कुच्छी । |
| कुब्जः | ... | खुज्जो । |
| कृतिः | ... | किई । |
| कृत्या | ... | किच्चा । |
| कृपा | ... | किवा । |
| कृषिः | ... | किसी । |
| कृष्णः | .. | कण्हो—कसणो । |
| कैटभः | ... | केढवो । |
| कैतवं | . | कइअवो । |
| कैलासः | . | केलासो । |
| कौमुदी | . | कोमुई । |
| कौरवः | .. | कउरओ । |
| कौशलं | ... | कोसलो—कउसलो । |
| कौशाम्बी | . | कोसंबी । |
| कौस्तुभः | ... | कोत्थुहो । |
| क्षणं | .. | छणं—खणं । |
| क्षमा | | छमा । |
| क्ष्मा | .. | खमा । |
| क्षारं | ... | छारं । |
| क्षीरं | ... | छीरं । |
| क्षुण्णः | ... | छुण्णो । |

| संस्कृतम् । | प्राकृतम् । |
|---|---|
| क्षुद्रः ... | खद्दो । |
| क्षुब्धः .. | छुद्धो । |
| क्षेत्रं ... | छेत्तं । |

खकारादयः ।

| | |
|---|---|
| खड्गः ... | खग्गो । |
| खादितं ... | खाइअं । |

गकारादयः ।

| | |
|---|---|
| गदा ... | गआ । |
| गद्गदः ... | गग्गवो । |
| गभीरं ... | गहिरं । |
| गर्त्तः --- | गड्डो । |
| गर्द्दभः ... | गड्डहो । |
| गर्भितः .. | गब्भिणं । |
| गाथा ... | गाहा । |
| गुह्यकः ... | गुज्झओ । |
| गृहं . | घरं । |
| गृहपतिः .. | गहवई । |
| गोदावरी .. | गोला । |
| गोष्ठी ... | गोट्ठी । |
| गौरवं .. | गारवं—गउरवं । |
| ग्रीष्मः ... | गिम्हो । |

घकारादयः ।

| | |
|---|---|
| घृणा ... | घणा । |

चकारादयः ।

| | |
|---|---|
| चतुर्थी | चोत्थी—चउत्थी । |
| चतुर्दशी .. | चोद्दही—चउद्दही । |
| चन्द्रः ... | चंदो । |

| संस्कृतम् । | प्राकृतम् । |
|---|---|
| चन्द्रिका .. | चंदिमा । |
| चरणः . | चलणो । |
| चिकुरः ... | चिहुरो । |
| चिह्नं .. | चिंधं—चेधं । |
| चैत्रः ... | चइत्तो । |
| चौर्य्यं ... | चोरिअं । |

छकारादयः ।

| | |
|---|---|
| छाया .. | छाहा । |

जकारादयः ।

| | |
|---|---|
| जघनः ... | जहणो । |
| जठरं ... | जढ़रं । |
| जनकः | जणओ । |
| जन्म . | जम्मो । |
| जह्नुः . | जण्हू । |
| जामातृकः | जामाउओ । |
| जुगुप्सा | जुगुच्छा । |
| ज्या ... | जीआ । |

झकारादयः ।

| | |
|---|---|
| झटिति ... | झत्ति । |

तकारादयः ।

| | |
|---|---|
| तमः ... | तमो । |
| तदानीं .. | तआणिं । |
| तादृशः ... | तारिसो । |
| ताम्रं ... | तंबं । |
| तावत् ... | ताव—तेद्दहं—तेत्तिअं । |
| तुण्डं ... | तोंडं । |

| संस्कृतम्। | प्राकृतम्। |
|---|---|
| तूर्य्यं | तूरं। |
| तृणं | तणं। |
| तृतीयं | तइअं। |
| त्रयोदश | तेरहो। |
| त्रैलोक्यं | तेल्लोक्कं—तेलोअं। |
| **दकारादयः।** | |
| दंष्ट्रा | दाढ़ा। |
| दण्डः | डंडो। |
| दशनः | डसणो। |
| दशमुखः | दहमुहो—दसमुहो। |
| दशरथः | दहरहो—दसरहो। |
| दाड़िमं | दालिमं—दाड़िमं। |
| दिवसः | दिअहो। |
| दीर्घं | दिग्घो—दीहो। |
| दुकूलं | दुअल्लं—दुऊलं। |
| देवरः | दिअरो—देअरो। |
| देवस्तुतिः | देवत्थुई—देवथुई। |
| दैवं | देव्वं—दइवं। |
| दोला | डोला। |
| दोहदः | दोहलो। |
| द्वितीयं | दुइअं। |
| **धकारादयः।** | |
| धनुः | धणू। |
| धूर्त्तः | धुत्तो। |
| धैर्य्यं | धीरं। |
| **नकारादयः।** | |
| नग्नः | नग्गो। |
| नभः | णहं। |
| नर्त्तकः | णट्टओ। |
| नर्त्तकी | णट्टई। |
| नवमालिका | णोमालिआ। |
| निकषः | णिहसो। |
| नित्यं | णिच्चं। |
| निद्रा | णेद्दा—णिद्दा। |
| निविड़ं | णिविड़ो। |
| निर्वृतं | णिव्वुदं। |
| निषधः | णिसढो। |
| नीड़ं | णेड्डं। |
| नूपुरं | णेउरं। |
| **पकारादयः।** | |
| पक्वं | पिक्कं। |
| पञ्चदश | पण्णरहो। |
| पञ्चाशत् | पण्णासा। |
| पताका | पड़ाआ। |
| पथ्यं | पच्छं। |
| पद्मं | पउमं। |
| पनसः | फणसो। |
| पन्थाः | पण्थो—पहो। |
| परिखा | फलिहा। |
| परिघः | फलिहो। |
| परुषः | फरुसो। |

| संस्कृतम्। | प्राकृतम्। |
|---|---|
| पर्य्यन्तं ... | पेरंतं। |
| पिण्डं . | पेडं—पिंडं। |
| पिष्टं . | पेट्ठं—पिट्ठं। |
| पीनता .. | पीणदा। |
| पीनत्वं ... | पीणत्तणं। |
| पुरुषः | पुरिसो। |
| पुस्तकं .. | पोत्थओ। |
| पुष्करः ... | पोक्खरो। |
| पृथिवी .. | पुहवी। |
| पौरः .. | पउरो। |
| पौरुषम् .. | पउरिसं। |
| प्रकटं ... | पअड़ं—पाअड़ं। |
| प्रकोष्ठः | पवोट्ठो—पउट्ठो। |
| प्रतिपत् | पड़िवआ—पाड़िवआ। |
| प्रतिपत्तिः | पड़िवट्टी। |
| प्रतिसरः | पड़िसरो। |
| प्रतिस्पर्द्धिन् | पड़िसिद्धी—पाड़िसिद्धी। |
| प्रत्यक्षं | पच्चक्खं। |
| प्रथमः | पढ़मो। |
| प्रदीप्तः | पलित्तं। |
| प्रद्युम्नः | पज्जुण्णो। |
| प्रश्नः | पण्हो। |
| प्रसिद्धिः | पसिद्धी—पासिद्धी। |
| प्रस्तारः | पत्थरो—पत्थारो। |
| प्रहारः | पहरो—पहारो। |

| संस्कृतम्। | प्राकृतम्। |
|---|---|
| प्राकृतम् | पउअं—पाउअं। |
| **वर्ग्यबकारादयः।** | |
| ब्रह्मचर्य्यं | बम्हचेरं—बम्हचरीअं |
| ब्राह्मणः .. | बम्हणो। |
| **भकारादयः।** | |
| भार्य्या | भारिआ। |
| भैरवः | भइरव्वो। |
| भ्रमरः ... | भमरो। |
| **मकारादयः।** | |
| मधूकं ... | महुअं। |
| मध्याह्नः ... | मज्झण्णो। |
| मन्मथः .. | वम्महो। |
| मयूखः ... | मोहो—मऊहो। |
| मयूरः | मोरो—मऊरो। |
| माधुर्य्यं .. | महुरिअं। |
| मुकुटं .. | मउअं। |
| मुकुलं . | मउलं। |
| मूर्त्तिः | मुत्ती। |
| मृतं | मअं। |
| मृदङ्गः | मुदंगो। |
| मेखला | मेहला। |
| मेघः | मेहो। |
| **यकारादयः।** | |
| यक्षः | जक्खो। |
| यमुना | जउणा। |
| यशः | जसो। |
| यष्टिः | लट्ठी। |

| संस्कृतम् । | | प्राकृतम् । |
|---|---|---|
| युधिष्ठिरः | | जहिट्ठिलो । |
| यौवनं | | जोव्वणं । |

रकारादयः ।

| | | |
|---|---|---|
| रश्मिः | | रस्सी । |
| राका | | राआ । |
| रात्रिः | | रत्ती । |
| राधा | | राहा । |
| रुद्रः | | रुद्दो—रुद्रो । |

लकारादयः ।

| | | |
|---|---|---|
| लवणं | | लोणं । |

वकारादयः ।

| | | |
|---|---|---|
| वनिता | . | वणिदा । |
| विद्युत् | ... | विज्जू । |
| विश्रम्भः | ... | वीसंभो । |
| विष्णुः | ... | वेण्हू—विण्हू । |
| विसिनी | ... | भिसिणी । |
| वीर्यं | ... | वीरिअं । |
| वृक्षः | .. | वक्खो—रुक्खो । |
| वृद्धः | .. | वुड्ढो । |
| वेतनः | . | वेड़िणो । |
| वेदना | .. | विअणा—वेअणा । |
| वैदेहः | ... | वइदेहो । |
| वैशम्पायनः | | वइसंपाअणा । |
| वैशाखः | ... | वइसाहो । |
| व्यजनं | ... | विअणो । |

शकारादयः ।

| संस्कृतम् । | | प्राकृतम् । |
|---|---|---|
| शफरं | .. | सभलं । |
| शफरी | | सभरी । |
| शय्या | | सेज्जा । |
| शब्दः | | सद्दो । |
| शरत् | | शरदो । |
| शावकः | | छावओ । |
| शिफा | | सिभा । |
| शिरः | | सिरं । |
| शिश्नः | | सिण्हो । |
| शीकरः | .. | सीभरो—सीहरो । |
| शृगालः | | शिआले—शिआल । |
| शेफालिका | | सेभालिआ । |
| शौण्डः | | सुंडो । |
| श्मशानं | .. | मसाणं । |
| श्मश्रुः | .. | सस्सू । |
| श्लक्ष्णः | .. | सण्हं । |

षकारादयः ।

| | | |
|---|---|---|
| षड्जः | ... | सज्जो । |
| षण्मुखः | ... | छम्मुहो । |
| षष्ठी | | छट्ठी । |

सकारादयः ।

| | | |
|---|---|---|
| संवर्त्तकः | ... | संवत्तओ । |
| समस्तः | .. | समत्थो । |
| सिक्थकः | .. | सित्थउ । |
| सुप्तः | ... | सुत्तो । |
| सूर्यः | ... | सूरो—सुज्जो । |
| सौकुमार्यं | ... | सोअमल्लं । |

| संस्कृतम्। | प्राकृतम्। | संस्कृतम्। | प्राकृतम्। |
|---|---|---|---|
| सौन्दर्य्यं | सुंदेरं। | स्पन्दनं | फंदणं। |
| सौम्यः | सोम्मो। | स्पर्शः | फंसो। |
| स्कन्दः | खंदो। | स्फोटकः | खोड़ओ। |
| स्खलितं | खलिअं। | स्वप्नः | सिविणो। |
| स्तम्बः | तंबो। | | |
| | | हकारादयः। | |
| स्तम्भः | खंभो। | | |
| स्तवकः | थवओ। | हतः | हदो। |
| स्तुतिः | थुई। | हर्षः | हरिसो। |
| स्थाणुः | खाणू—थाणू। | हस्तः | हत्थो। |
| स्नानं | ण्हाणं। | हृदयं | हिअअं। |
| स्नेहः | सणेहो—णेहो। | ह्रीः | हिरी। |

---

# अथ धातुरूपाणि दर्श्यन्ते। *

## वर्त्तमानकालविभक्तयः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमपुरुषः। | इ, ए। | न्ति, ते, इरे। |
| मध्यमपुरुषः। | सि। | इत्था, ह। |
| उत्तमपुरुषः। | मि। | मो, मु, म। |

---

* 'द्विवचनस्य बहुवचनम्।' (६।६३) इत्यनेन सूत्रेण तिङां द्विवचनस्य बहुवचनं प्रयोक्तव्यम्, प्राकृते शब्दरूपे धातुरूपे च द्विवचनप्रयोगो नास्तीति ज्ञेयम्।

## भविष्यत्कालविभक्तयः । *

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमपुरुषः । | हिइ । | हिंति, हिंते, हिरे । |
| मध्यमपुरुषः । | हिसि । | हित्था, हिअ । |
| उत्तमपुरुषः । | हिमि, स्सामि, हामि । स्सं । | हिमो, स्सामो, हामो, हिस्सा, हित्था । |

एवं मुमयोरपि ।

## लोट्-विधिलिङोरेकविधैव विभक्तिः । †

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमपुरुषः । | उ । | न्तु । |
| मध्यमपुरुषः । | सु । | ह । |
| उत्तमपुरुषः । | मु । | मो । |

---

## हसधातुरूपाणि ।

## वर्त्तमानकालविभक्तयः । ‡

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमपुरुषः । | हसइ, हसए । | हसंति, हसंते, हसिरे । |

---

* भविष्यत्कालविभक्तेर्मतभेदेन रूपभेदो दृश्यते, यथा—स्सदि, स्ससि, स्सं, स्सामि । स्सति, स्सध, स्सह । स्सामो । इत्येव यथाक्रमं पुरुषत्रये एकवचन-बहुवचनयोः प्रयोक्तव्यम् । अन्ये तु—"स्स" इत्यस्य स्थाने 'च्छ' इत्याचक्षते । तेन च्छदि, च्छति, च्छसि, च्छामि, इत्यादि यथायथमुन्नेयम् ।

† लुङादिषु सर्वेषां धातूनां विशेषसूत्राभावात् प्रयोगतस्तेषामुदाहरणानि मृग्याणि ।

‡ "लादेशे वा" (७।३४) इत्यनेन सूत्रेण लकारादेशे परतोऽत एत्वं भवति

| | | |
|---|---|---|
| मध्यमपुरुषः । | हससि, हससे । | हसह, हसित्था । |
| उत्तमपुरुषः । | हसामि, हसमि । | हसामो, हसिमो, हसाम, हसिम, हसामु, हसिमु । |

## लोट्-विधिलिङोर्विभक्तयः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमपुरुषः । | हसउ । | हसंतु । |
| | (हसतु, हसेत्) । | (हसन्तु, हसेयुः) । |
| मध्यमपुरुषः । | हससु । | हसह । |
| | (हस, हसे) । | (हसत, हसेत) । |
| उत्तमपुरुषः । | हसमु । | हसामो । |
| | (हसानि, हसेयम्) । | (हसाम, हसेम) । |

## लुट्-लृड्विभक्तयः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमपुरुषः । | हसिहि । | हसिहिंति । |
| | (हसिता, हसिष्यति) । | (हसितारः, हसिष्यन्ति) । |
| मध्यमपुरुषः । | हसिहिसि । | हसिहित्था । |
| | (हसितासि, हसिष्यसि) । | (हसितास्थ, हसिष्यथ) । |
| उत्तमपुरुषः । | हसिस्सं, हसिस्सामि । | हसिस्सामो, हसिहामो । |
| | हसिहिमि, हसिहामि । | हसिहिमो, हसिहिस्सा, |
| | (हसितास्मि, हसिष्यामि) । | हसिहित्था इत्यादि । |
| | | (हसितास्म, हसिष्यामः) । |

---

वा ; तेन "हसेइ"-"हसइ" इत्यादिकं वैकल्पिकपदमपि भवितुमर्हति। हस्धातुवत् सर्वासु विभक्तिषु भण-पठादीनामप्येवं रूपाणि कर्त्तव्यानीति बोध्यम् ।

केषाञ्चिद्धातूनामतीतकाले प्रथमपुरुषैकवचनरूपं दर्श्यते।—

स्था—लुङ्—ठासी (अस्थात्)। लङ्—ठाही (अतिष्ठत्)। लिट्—ठाहीअ (तस्थौ)।

ग्रह—लुङ्—गेण्हीअ (अग्रहीत्)। लङ्—अगृह्णात्। लिट्—जग्राह।

कृ—लुङ्—कासी (अकार्षीत्) लङ्—काही (अकरोत्) लिट्—काहीअ (चकार)।

अन्यकृता तु लङ्-लुङ्-लिट्सु 'काहीअ' इत्येकं पदं विहितमित्यवधेयम्।

भू—हुवीअ। (अभूत्, अभवत्, बभूव)। इति तिसृष्वपि अतीतविभक्तिषु रूपमेकविधमेवेति बोध्यम्।

## श्रुधातोर्लुङ्-लृङ्विभक्तयः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमपुरुषः। | सोच्छिइ, सोच्छिहिइ (श्रोष्यति, श्रोता)। | सोच्छिंति, सोच्छिहिति (श्रोष्यन्ति, श्रोतारः)। |
| मध्यमपुरुषः। | सोच्छिसि, सोच्छिहिसि। (श्रोष्यसि, श्रोतासि)। | सोच्छित्था, सोच्छिहित्था। (श्रोष्यथ, श्रोतास्थ)। |
| उत्तमपुरुषः। | सोच्छं। (श्रोष्यामि, श्रोतास्मि)। | सोच्छिमो, सोच्छिहिमो, * सोच्छिमु, सोच्छिहिमु, सोच्छिम, सोच्छिहिम, सोच्छिस्सामो, सोच्छिस्सामु, सोच्छिस्साम। इत्यादि। (श्रोष्यामः, श्रोतास्मः)। |

* "कृ दा-श्रु-वचि-गमि-रुदि-दृशि विदिरूपाणां काह-दाह सोच्छ-वोच्छ-

## भूधातोर्लुड्लृङ्-विभक्तयः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमपुरुषः । | होहिइ, होज्ज, होज्जा । (भविष्यति, भविता) । | होहिंति । (भविष्यन्ति, भवितारः) । |
| मध्यमपुरुषः । | होहिसि । (भविष्यसि, भवितासि) । | होहित्था, होहिश्र । (भविष्यथ, भवितास्थ) । |
| उत्तमपुरुषः । | होहिमि, होस्सामि, होहामि, होस्स । (भविष्यामि, भवितास्मि) । | होहामो, होस्सामो । होहिमो, होहिस्सा, होहित्था, एवं मुमयोरपि । (भविष्यामः, भवितास्मः) । |

## कृधातोर्लुड्लृङ्-विभक्तयः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमपुरुषः । | काहिइ । (कर्त्ता, करिष्यति) । | काहिंति । (कर्त्तारः, करिष्यन्ति) । |
| मध्यमपुरुषः । | काहिसि । (कर्त्तासि, करिष्यसि) । | काहित्था । (कर्त्तास्थ, करिष्यथ) । |
| उत्तमपुरुषः । | काहं । (कर्त्तास्मि, करिष्यामि) । | काहमो । इत्यादि । (कर्त्तास्मः, करिष्यामः) । |

---

गच्छ-रोच्छ-दच्छ-वेच्छ ।" (७।१६) इत्यनेन सूत्रेण भविष्यति काले उत्तमैकवचने कृञादीना स्थाने यथासख्य काह प्रभृतय आदेशो भवन्ति। "श्रुादीना त्रिष्वप्यनुस्वारवर्ज्जं हिलोपश्च वा।" (७।१७) इत्यनेन च सूत्रेण श्रु इत्येवमादीनां प्रथम-मध्यमोत्तमेषु त्रिष्वपि पुरुषेषु परतो भविष्यति काले सोच्छ इत्यादय आदेशा भवन्ति, अनुस्वार विहाय, हिलोपश्च वा। आदौ षोडशसूत्रेण सोच्छ, पश्चात् सप्तदशसूत्रेण अनुस्वारस्य लोप कृत्वा पदानि साध्यानीति विवेक्तव्यम्। एव बोच्छादिरपि ज्ञेयः। श्रुादीनामिति ग्रहणात् षोडशसूत्रोक्त-कृदाधातुद्वयं परित्यक्त-मित्यप्यवगन्तव्यम्।

## णिजन्तधातूनां रूपाणि। *

| | | |
|---|---|---|
| कृ—कारेइ, | करावेइ। | (कारयति)। |
| हस्—हासेइ, | हसावेइ। | (हासयति)। |
| पठ्—पाढ़ेइ, | पढावेइ। | (पाठयति)। |

## णिजन्तधातूनां भावकर्मवाच्यपदानि।

| | | |
|---|---|---|
| कृ—कराविज्जइ, | कारिज्जइ। | (कार्य्यते)। |
| पठ्—पढाविज्जइ, | पाढ़िज्जइ। | (पाठ्यते)। |
| हस्—हसाविज्जइ, | हासिज्जइ। | (हास्यते)। |

एवमन्येषामपि धातूना णिचि भावकर्मणोर्वाच्ययो रूपाणि ज्ञेयानि।

## भावकर्मवाच्यपदानि। †

| | | |
|---|---|---|
| श्रु—सुव्वइ, | सुणिज्जइ। | (श्रूयते)। |
| हु—हुव्वइ, | हुणिज्ज इ। | (हूयते)। |
| जि—जिव्वइ, | जिणिज्जइ। | (जीयते)। |

---

* "णिच एदादेरत आत्।" (७।२६) णिच्प्रत्ययस्य एकारादेशो भवति। धातोरादेरकारस्य च आत्व भवति। "आवे च।" (७।२७) णिच "आवे" इत्ययमादेशो भवति। चकारात षड्विशसूत्रोक्त कार्य्यञ्च। द्वाभ्या सूत्राभ्या द्वावादेशौ स्त, तेन पदद्वयं सिद्धमिति। इत्यमन्येषामपि णिजन्ताना धातूना रूपाणि विधेयानीति ज्ञेयम्।

† अष्टमपरिच्छेदस्य षट्पञ्चाशतमसूत्रमारभ्य षष्टितम सूत्रान्त. पञ्चभिरेव सूत्रैरेतेषा रूपाणि सिद्धानि। अन्येषान्तु धातूना यथायथ भावे कर्म्मणि च वाच्ये रूपाणि यथासम्भव सूत्रानुसारेण बोद्धव्यानि। "यक-ईअ-इज्जौ" (७।८) इत्यनेन सर्वेषामेव यक: स्थाने "ईअ"-"इज्ज" इत्यादेशौ भवत:। श्रुप्रभृतीनां सूत्रविशेषैरेव विशिष्टानि पदानि सिद्धानीति। "धातोर्भावकर्त्तृकर्म्मसु परस्मैपदम्" (१२।२७) इत्यनेन सूत्रेण त्रिष्वपि वाच्येषु परस्मैपदमेव भवतीति बोध्यम्।

लू—लुव्वइ, लुणिज्जइ। (लूयते)।
धू—धुव्वइ, धुणिज्जइ। (धूयते)।
हस्—हस्सइ, हसिज्जइ। (हस्यते)।
गम्—गम्मइ, गमिज्जइ। (गम्यते)।
रम्—रम्मइ, रमिज्जइ। (रम्यते)।
लिह्—लिज्झइ। (लिह्यते)।
हृ—हीरइ। (ह्रियते)।
कृ—कीरइ। (क्रियते)।

## शतृशानच्प्रत्ययौ। *

राज्—शतृ—रेहंतो (राजन्)।
शानच्—रेहमाणो। (राजमानः)।
स्मृ—शतृ—सुमरंतो—भरंतो। (स्मरन्)।
भी—शतृ—भाइंतो—बीहंतो। (बिभ्यत्)।
ग्रह—शतृ—गेण्हंतो (गृह्णन्)।
शानच्—गेण्हमाणो। (गृह्णानः)।
पठ्—शतृ—पढंतो। (पठन्)।
शानच्—पढमाणो। (पठमानः)।
हस्—शतृ—हसंतो। (हसन्)।
शानच्—हसमाणो। (हसमानः)।

स्त्रीलिङ्गे तु त्रीणि पदानि स्युः।—

हस्—शतृ—हसई, हसतो, हसमाणा। (हसन्ती, हसमाना)।
वेप्—शतृ—वेवई, वेवती, वेवमाणा। (वेपन्ती, वेपमाणा)।

---

* यदि च संस्कृतव्याकरणे शानच्प्रत्ययस्य आत्मनेपदत्वमभिहितं, तथाऽपि प्राकृतव्याकरणेऽस्मिन् आत्मनेपदप्रयोगदर्शनाभावात् सर्वासामेव विभक्तीनां परस्मैपदान्तर्गतत्वेन "न्त-माणौ शतृशानचोः" (७।१०) इति सूत्रे शानच्प्रत्ययस्यापि परस्मैपदत्वमेवाङ्गीकर्त्तव्यम्।

## क्त-क्त्वाच्-तुमुन्-तव्यप्रयोगाः। *

ग्रह्—क्त—गहिअं। (गृहीतम्)।

क्त्वाच्—घेत्तूण। (गृहीत्वा)।

तुम्—घेत्तुं। (ग्रहीतुम्)।

तव्य—घेत्तव्व। (ग्रहीतव्यम्)।

कृ—क्त—कअं। (कृतम)।

क्त्वाच्—काऊण। (कृत्वा)।

तुम्—काउ। (कर्त्तुम्)।

तव्य—काअव्वं। (कर्त्तव्यम्)।

हस्—क्त—हसिअं। (हसितम्)।

क्त्वाच्—हसेऊण, हसिऊण। (हसित्वा)।

तुम्—हसेउं, हसिउं। (हसितुम्)।

तव्य—हसेअव्वं, हसिअव्वं। (हसितव्यम्)।

पठ्—क्त—पढ़िअं। (पठितम्)।

क्त्वाच्—पढेऊण, पढ़िऊण। (पठित्वा)।

तुम्—पढ़ेउं, पढ़िउं। (पठितुम्)।

तव्य—पढेअव्वं, पढ़िअव्व। (पठितव्यम्)।

## एते क्तप्रत्ययेन सह निपात्यन्ते।—

दा—क्त—दिण्णं। (दत्तम्)। रुद्—क्त—रुण्णं। (रुदितम्)।

त्रस—क्त—हित्थं। (त्रस्तम्)। दह—क्त—दड्ढं। (दग्धम्)।

रञ्ज—क्त—रत्तं। (रक्तम्)।

---

* "क्ते" (७।३२) क्तप्रत्यये परतोऽत' इर्भवति। "ए च क्त्वा-तुमुन्-तव्य-भविष्यत्सु" (७।३३) "क्त्वा तुमुन्-तव्य" इत्येतेषु भविष्यति काले च अत एत्व भवति, चकारादित्व। "घेत् क्त्वा-तुमुन्-तव्येषु" (८।१६) इत्यनेन क्त्वाप्रत्ययादिषु गृहधातोः स्थाने घेत्।

## णिजन्त "क्त"-प्रत्ययनिष्पन्नप्रयोगाः। *

कृ—णिच्+क्त—कराविअं, कारिअं। (कारितम्)।
हस्—णिच्+क्त—हसाविअ, हासिअं। (हासितम्)।
पठ्—णिच्+क्त—पढ़ाविअ, पाढ़िअं। (पाठितम्)।
तुष्—णिच्+क्त—तोसाविअं, तोसिअ। (तोषितम्)।
मुष्—णिच्+क्त—मोसाविअं, मोसिअं। (मोषितम्)।

---

## अकारादिक्रमेणाव्ययशब्दप्रयोगाः।

अइ—सम्भाषणे।
अज्ज—आमन्त्रणे।
अन्तो—अन्तरर्थे।
अरे—सम्भाषणे, रतिकलहे, आक्षेपे च।
अलाहि—निवारणे।
अव्वो—दुःखसूचनासम्भावनेषु।
आं—स्वीकारे।
इर—अनिश्चिताख्याने।
उ—क्षेपविस्मयसूचनासु।
उण—पुनरर्थे।
ओ—सूचनापश्चात्तापविकल्पेषु
किण—प्रश्ने।
किर—अनिश्चिताख्याने।
किल—अनिश्चिताख्याने।
क्खु—निश्चयवितर्कसम्भावनेषु।
जेव्व—एवार्थे।
झत्ति—शीघ्रार्थे।
णवर—केवलार्थे।
णवरि—आनन्तर्य्ये।

---

"क्त्व का भूत-भविष्यतोश्च" (८।१७) इत्यनेन क्त्व. स्थाने "का," चकारात क्त्वा-तुमुन् तव्येषु परतश्च "का" इत्यादेश. स्यात्।

* "आवि: क्त कर्म्मभावेषु वा" (७।२८) निजन्तानां धातूनां क्तप्रत्यये कृते 'आवि' इत्यादेश' स्यात्। अतएव प्राकृतभाषाया निजन्तधातूनां क्तप्रत्ययनिष्पन्नशब्दा नाटक-नाटिकाप्रकरणादिषु अवहितैरनुसन्धेया ज्ञेयाश्चेति।

णवि—वैपरीत्ये।

तस—तिर्य्यगर्थे।

पराहुत्त—पराङ्मुखार्थे।

पिव—इवार्थे।

मणं—मनागर्थे।

मिव—इवार्थे।

म्मिव—इवार्थे।

रे—रतिकलहे, आक्षेपे, सम्भाषणे च।

व—इवार्थे।

वले—सम्भाषणे।

बाहिरं—बहिरर्थे।

विअ—इवार्थे, अवधारणे च।

विपी—पदावसाने अप्यर्थे।

वेअ—अवधारणे।

वेव्वे—भयामन्त्रण-विषाद-वारणेषु।

सणिअं—शनैरर्थे।

सू—कुत्सायाम्।

हला—सख्यामन्त्रणे।

हित्थं—व्रीडिते, भीते च।

हिर—किलार्थे।

हिरे—सम्भाषणे, रतिकलहे, आक्षेपे च।

हद्धी—निर्वेदार्थे।

हुं—दाने, पृच्छायाम्, निर्धारणे, निश्चये, वितर्के, सम्भावनार्थे च।

शौरसेन्यामपभ्रंशे च प्राकृताव्ययशब्दा यथायथं प्रयोगतो द्रष्टव्याः, बाहुल्यभयादत्र नोट्टङ्किताः।

---

# शब्दरूपप्रकरणम् । *

—००—

## तत्रादावकारान्तः पुंलिङ्गशब्दः ।

### वृषभशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | वसहो । | वसहा । |
| द्वितीया । | वसहं । | वसहे, वसहा । |
| तृतीया । | वसहेण । | वसहेहिं । |
| पञ्चमी । | वसहा, वसहादो, वसहादु, वसहाहि । | वसहाहितो, वसहासुंतो । |
| षष्ठी । | वसहस्स । | वसहाण । |
| सप्तमी । | वसहे, वसहम्मि । | वसहेसु । |
| सम्बोधनम् । | वसह । | वसहा । |

वृक्षपुरुषादयः शब्दा वृषभशब्दवद् बोद्धव्याः ।

## इकारान्तपुंलिङ्गशब्दः ।

### मुनिशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | मुणी । | मुणीओ, मुणिणो । |
| द्वितीया । | मुणिं । | मुणिणो । |

* "द्विवचनस्य बहुवचनम् ।" (६।६३) इत्यनेन सूत्रेण द्विवचनस्थाने बहुवचन भवति । प्राकृते द्विवचनं नास्तीति । "चतुर्थ्याः षष्ठी ।" (६।६४) । इत्यनेन सूत्रेण चतुर्थीविभक्तिस्थाने षष्ठीविभक्तिर्भवति । प्राकृते चतुर्थी विभक्तिर्नास्तीत्यपि बोध्यम् ।

| | | |
|---|---|---|
| तृतीया । | मुणिणा । | मुणीहि । |
| पञ्चमी । | मुणीदो, मुणीदु, मुणीहि । * | मुणिहिंतो, मुणिसुंतो । |
| षष्ठी । | मुणिणो, मुणिस्स । | मुणिण । |
| सप्तमी । | मुणिम्मि । | मुणीसु । |
| सम्बोधनम् । | मुणि । | मुणीओ, मुणिणो । |

अग्निप्रभृतयः शब्दा मुणिशब्दवत् ।

---

## उकारान्तपुंलिङ्गशब्दः ।

### वायुशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | बाऊ । | बाऊओ, बाउणो । |
| द्वितीया । | बाउ । | बाउणो । |
| तृतीया । | बाउणा । | बाऊहिं । |
| पञ्चमी । | बाऊदु, बाऊदो, बाऊहि । | बाउहिंतो, बाउसुंतो । |
| षष्ठी । | बाउणो, बाउस्स । | बाउण । |
| सप्तमी । | बाउम्मि । | बाऊसु । |
| सम्बोधनम् । | बाउ । | बाऊओ, बाउणो । |

साधुगुरुप्रभृतयः शब्दा वायुशब्दवत् ।

---

* "ङसेरादुदोह्यः." (५।६) इति सूत्रे अत परत एव ङसे स्थाने आ-दु-दो-हीना विधानात् पञ्चम्येकवचने इकारोकारान्तशब्देभ्यः ङसे आदेशान्तरविधानाभावात् "शेषोऽदन्तवत्" (६।६०) इति सूत्रे उक्ताचक्षेषविधे. इकारोकारान्तादपि विधानात् नद्यादिशब्दाना ङसेरादुदोह्यः अबाधिता भविष्यन्तीति यथोक्तरूपाण्येव अव्याहतानीति ।

## ऋकारान्तपुंलिङ्गशब्दः ।

### पितृशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | पिआ, पिअरो । | पिदुणो, पिअरा । |
| द्वितीया । | पिअरं । | पिअरे, पिदुणो । |
| तृतीया । | पिअरेण, पिदुणा । | पिअरेहिं । |
| पञ्चमी । | पिअरादो, पिअरादु, पिअराहि । | पिअरहिंतो, पिअरसुंतो । |
| षष्ठी । | पिअरस्स, पिदुणो । | पिअराण । |
| सप्तमी । | पिअरे, पिअरम्मि । | पिअरेसु, पिदुसु । |
| सम्बोधनम् । | हे पिआ, पिअर । | पिअरा । |

भ्रातृ-जामातृप्रभृतयः शब्दाः पितृशब्दवत् ।

---

## ऋकारान्तपुंलिङ्गशब्दः ।

### भर्तृशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | भत्तारो । | भत्तुणो, भत्तारा । |
| द्वितीया । | भत्तारं । | भत्तुणो, भत्तारे । |
| तृतीया । | भत्तुणा, भत्तारेण । | भत्तारेहिं । |
| पञ्चमी । | भत्तारादो, भत्तारादु, भत्ताराहि । | भत्तारहितो, भत्तारसुंतो । |
| षष्ठी । | भत्तुणो, भत्तारस्स । | भत्ताराण । |
| सप्तमी । | भत्तारे, भत्तारम्मि । | भत्तूसु, भत्तारेसु । |
| सम्बोधनम् । | भत्तार । | भत्तारा । |

कर्तृ-दातृप्रभृतयः शब्दाः भर्तृशब्दवत् ।

# आकारान्तस्त्रीलिङ्गशब्दः ।

## लताशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | लदा । | लदाउ, लदाओ, लदा । |
| द्वितीया । | लदं । | लदाउ, लदाओ । |
| तृतीया । | लदाइ, लदाए । | लदाहिं । |
| पञ्चमी । | लदादो, लदादु, लदाहि । | लदाहिंतो, लदासुंतो । |
| षष्ठी । | लदाइ, लदाए । | लदाण । |
| सप्तमी । | लदाइ, लदाए । | लदासु । |
| सम्बोधनम् । | लदे । | लदाउ, लदाओ, लदा । |

गदामालादयः शब्दा लताशब्दवत् ।

---

# इकारान्तस्त्रीलिङ्गशब्दाः ।

## मतिशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | मती । | मती, मतिओ, मतिउ । |
| द्वितीया । | मतिं । | मतिउ, मतिओ । |
| तृतीया । | मतीए, मतीइ, मतीआ, मतीअ । | मतीहिं । |
| पञ्चमी । | मतीए, मतीइ, मतीआ, मतीअ । | मतीहिंतो, मतीसुंतो । |

| | | |
|---|---|---|
| षष्ठी। | मतीए, मतीइ, मतीआ, मतीअ। | मतीण। |
| सप्तमी। | मतीए, मतीइ, मतीआ, मतीअ। | मतीसु। |
| सम्बोधनम्। | मति। | मती, मतिओ, मतिउ। |

स्तुति-भक्ति-बुद्धिप्रभृतयः शब्दा मतिशब्दवत्।

---

## ईकारान्तस्त्रीलिङ्गशब्दः।

## नदीशब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | णई, णईआ। | णईओ, णईउ, णईआ। |
| द्वितीया। | णइं। | णईउ, णईओ। |
| तृतीया। | णईइ, णईए, णईअ, णईआ। | णईहिं। |
| पञ्चमी। | णईआ, णईदो, णईदु, णईहि। | णईहितो, णईसुंतो। |
| षष्ठी। | तृतीयावत्। | णईण। |
| सप्तमी। | तृतीयावत्। | णईसु। |
| सम्बोधनम्। | णइ। | णईओ, णईउ, णइआ। |

गौरी-सतीप्रभृतयः शब्दा नदीशब्दवत्।

---

## उकारान्तस्त्रीलिङ्गशब्दः।

### धेनुशब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | धेणू। | धेणू, धेणूओ, धेणूउ। |
| द्वितीया। | धेणुं। | धेणूओ, धेणूउ। |
| तृतीया। | धेणूए, धेणूइ, धेणूआ, धेणूअ। | धेणूहिं। |
| पञ्चमी। | धेणूदो, इत्यादि। | धेणूहिंतो, धेणूसुंतो। |
| षष्ठी। | तृतीयावत्। | धेणूण। |
| सप्तमी। | तृतीयावत्। | धेणूसु। |
| सम्बोधनम्। | धेणु। | धेणू, धेणूओ, धेणूउ। |

तनुप्रभृतयः शब्दा धेनुशब्दवत्।

---

## ऊकारान्तस्त्रीलिङ्गशब्दः।

### वधूशब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | बहू। | बहू, बहूओ, बहूउ। |
| द्वितीया। | बहुं। | बहूओ, बहूउ। |
| तृतीया। | बहूए, बहूइ, बहूआ, बहूअ। | बहूहिं। |
| पञ्चमी। | बहूदो, बहूदु, बहूहि। | बहूहिंतो, बहूसुंतो। |
| षष्ठी। | तृतीयावत्। | बहूण। |
| सप्तमी। | तृतीयावत्। | बहूसु। |
| सम्बोधनम्। | बहु। | बहूओ, बहूउ। |

वामोरू-तनू-प्रभृतयः शब्दा वधूशब्दवत्।

## ऋकारान्तस्त्रीलिङ्गशब्दः ।

### मातृशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | माआ । | माआ, माआरो । |
| द्वितीया । | माअं । | माआरो । |
| तृतीया । | माआइ । | माआहिं । |
| पञ्चमी । | माआए । | माआहिंतो, माआसुंतो । |
| षष्ठी । | माआए । | माआण । |
| सप्तमी । | माआए । | माआसु । |
| सम्बोधनम् । | माआ । | माआरो । |

अन्ये ऋकारान्ताः स्त्रीलिङ्गशब्दाः मातृशब्दवत् ।

---

## स्वरान्तक्लीबलिङ्गशब्दः ।

### अकारान्तकुलशब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | कुलं । | कुलाइं । |
| द्वितीया । | कुलं । | कुलाइं । |
| सम्बोधनम् । | कुल । | कुलाइं । |

अन्यत् सर्वं पुंलिङ्गवत् ।

वनप्रभृतयः शब्दाः कुलशब्दवत् । गृहशब्दस्य कश्चिद् विशेषोऽस्ति । घरं घराइं इत्यादि । घरादेशं कृत्वा सर्वत्र रूपं कार्य्यम् ।

---

## इकारान्तक्लीवलिङ्गशब्दः।

### दधिशब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | दहिं। | दहीइ। |
| द्वितीया। | दहिं। | दहीइ। |
| सम्बोधनम्। | दहि। | |

अन्यत् सर्वं पुंलिङ्गवत्।

वारिप्रभृतयः शब्दा दधिशब्दवत्। अस्थिशब्दस्य विशेषोऽस्ति। यथा,—अट्ठी, अट्ठीं, अट्ठीइं। हे अट्ठी। अन्यासु विभक्तिषु पुंलिङ्गवत् रूपं कर्त्तव्यम्।

---

## उकारान्तक्लीवलिङ्गशब्दः।

### मधुशब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | महुं। | महूइ। |
| द्वितीया। | महुं। | महूइ। |
| सम्बोधनम्। | महु। | |

अन्यत् सर्वं पुंलिङ्गवत्। सीधुप्रभृतयो मधुशब्दवत्।

---

## व्यञ्जनान्तशब्दाः।

### राजन्-शब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | राआ। | राआणो। |
| द्वितीया। | राअं। | राआणो, राए। |
| तृतीया। | राइणा, रण्णा। | राएहिं। |

| | | |
|---|---|---|
| पञ्चमी। | राआ, राआदो, राआदु। | राआहिंतो, राआसुंतो। |
| षष्ठी। | रस्रो, राइणो। | राआणं। |
| सप्तमी। | राअम्मि, राए। | राएसु। |
| सम्बोधनम्। | राअं, राअ। | |

## आत्मन्-शब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | अप्पा, अप्पाणो। | अप्पा, अप्पाणो। |
| द्वितीया। | अप्पाणं, अप्पं। | अप्पाणो, अप्पे। |
| तृतीया। | अप्पणा, अप्पाणेन। | अप्पाणेहिं, अप्पेहिं। |
| पञ्चमी। | अप्पादो, अप्पाणादो, इत्यादि। | अप्पाहिंतो, अप्पासुंतो। |
| षष्ठी। | अप्पणो, अप्पाणस्स। | अप्पाणं, अप्पाणाण। |
| सप्तमी। | अप्पाणम्मि, अप्पे। | अप्पेसु, अप्पाणेसु। |
| सम्बोधनम्। | अप्प। | अप्पा, अप्पाणो। * |

ब्रह्मन्-युवन्-अध्वन् प्रभृतयः शब्दा लक्ष्यानुसारेणात्मवत् साधवो भवन्ति। बम्हा, बम्हाणो। जुवा, जुवाणो। अद्धा, अद्धाणो इत्यादि।

---

* उक्तपूर्वाणां शब्दानां कल्पलतिकाकार-क्रमदीश्वर-हेमचन्द्रप्रभृतीनां विदुषां मतानुसारेण विभक्तिविशेषेषु आकृतिविशेषाः सन्ति, दृश्यन्ते च अग्गी, अग्गओ, अग्गरो, अग्गिओ, माइ, माअरा, मादरम् इत्यादिषु स्थलेषु तेषां प्रयोगाः, परं प्रयोगतः शब्दरूपाणां विभिन्नाकृतयो द्रष्टव्या इति सर्वमवदातम्।

# सर्वनामप्रकरणम्।

## पुंलिङ्गः सर्वशब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | सव्वो। | सव्वे। |
| द्वितीया। | सव्वं। | सव्वे। |
| तृतीया। | सव्वेण। | सव्वेहिं। |
| पञ्चमी। | सव्वा, सव्वादो, सव्वादु, सव्वाहि। | सव्वाहिंतो, सव्वासंतो। |
| षष्ठी। | सव्वस्स। | सव्वाण। |
| सप्तमी। | सव्वस्सिं, सव्वम्मि, सव्वत्थ। | सव्वेसु। |

स्त्रीलिङ्गे लताशब्दवत्, क्लीवलिङ्गे कुलशब्दवच्च रूपं कर्त्तव्यम्।

---

## पुंलिङ्गो यच्छब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | जो। | जे। |
| द्वितीया। | जं। | जे। |
| तृतीया। | जिणा, जेण। | जेहिं। |
| पञ्चमी। | जत्तो, जदो। | जाहिंतो, जासुंतो। |
| षष्ठी। | जास, जस्स, जिस्सा, जीसे, जीआ, जीए, जीअ, जीइ। | जेसिं, जाण। |
| सप्तमी। | जहिं, जस्सिं, जम्मि, जत्थ। | जेसु। |

## स्त्रीलिङ्गो यच्छब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | जा । | जाओ, जाउ, जीओ, जीउ । |
| द्वितीया । | जं । | प्रथमाबहुवचनवत् । |
| तृतीया । | जाए, जीए, जीआ, जाइ । | जाहिं । |
| पञ्चमी । | जादो, जादु, जीदो । | जाहिंतो, जासुंतो । |
| षष्ठी । | जासे, जाए, जाइ, जस्सा, जीसे, जिस्सा, जीए । | जासिं, जाण, जासां, जेसिं, जाणं, जीणं । |
| सप्तमी । | जाहिं, जाए, जीए, जीआ, जीअ, जाइ, जइआ । | जासु । |

यच्छब्दस्य स्त्रीलिङ्गवत् किम्-तदो रूपाणि कार्य्याणि ।

---

## पुंलिङ्गस्तच्छब्दः ।

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | सो । | ते, दे । |
| द्वितीया । | तं, णं । | ते, दे । |
| तृतीया । | तेण । | तेहिं । |
| पञ्चमी । | तो, तत्तो, तदो । | ताहिंतो, तासुंतो । |
| षष्ठी । | से, तास, तस्स, तीस्सा, तीसे, तीआ, तीए, तीअ, तीइ । | सिं, ताण । |

| सप्तमी। | तहिं, तस्सिं, तम्मि, तत्थ। | तेसु। |
|---|---|---|

स्त्रीनपुंसकयोः प्रथमैकवचने यथाक्रमं 'सा' 'तं' इत्येवं-रूपे पदे स्याताम्।

---

## पुंलिङ्ग एतच्छब्दः।

| | एकवचनम्। | द्विवचनम्। |
|---|---|---|
| प्रथमा। | एस, एसो। | एदे। |
| द्वितीया। | एदं। | एदे। |
| तृतीया। | एदेण, इदिणा। | एदेहिं, एतेहिं। |
| पञ्चमी। | एत्तो, एदाहि, एदादो, एदादु। | एतेहिंतो, एतेसुंतो, एदाण। |
| षष्ठी। | एदस्स, एतस्स। | एदेसिं, एदाण। |
| सप्तमी। | एदस्सिं, एदम्मि, एत्थ। | एदेसु। |

एतच्छब्दस्य स्त्रीलिङ्गे प्रथमैकवचने 'एसो' 'एसा' इति रूपद्वयं भवति, अन्यत् सर्वं पुंलिङ्गवत्।

---

## पुंलिङ्ग किम्शब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | को। | के। |
| द्वितीया। | कं। | के। |
| तृतीया। | केण। किणा। | केहिं। |
| पञ्चमी। | कत्तो, कदो। | कहिंतो, कसंतो। |

| | | |
|---|---|---|
| षष्ठी। | कास, कस्स, कीस्सा, कीसे, कैसिं, काण। | |
| | कीश्रा, कीए, कीश्र, कीइ। | |
| सप्तमी। | कहिं, कस्सिं, कम्मि, केसु। | |
| | कत्थ। | |

---

## पुंलिङ्ग इदम्-शब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | इमो। | इमे। |
| द्वितीया। | इमं। | इमे। |
| तृतीया। | इमिणा, इमेण। | इमेहिं। |
| पञ्चमी। | इमादो। | इमेहिंतो, इमेसंतो। |
| षष्ठी। | इमस्स, अस्स। | इमाण, इमेसिं। |
| सप्तमी। | अस्सिं, इमस्सिं, इमस्मि। | एमेसु। |

इदम्शब्दस्य क्लीबलिङ्गे सौ अमि च "इदं" "इणं" "इणमो" इत्येतानि त्रीणि रूपाणि भवन्तीति। "नपुंसके स्वमोरिदमिणमिणमो" (६।१८) इत्यनेन सूत्रेण पूर्वोक्तं पदत्रयं सिद्धमिति। स्त्रीलिङ्गे प्रथमैकवचने 'इअ' 'इमिआ' इति पदद्वयं स्यादिति बोध्यम्।

## पुंलिङ्गोऽदस्शब्दः।

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | अमू, अह। | अमूओ। |
| द्वितीया। | अमूं। | अमूओ। |
| तृतीया। | अमूणा। | अमूहिं। |
| पञ्चमी। | अमूओ। | अमूहिंतो, अमूसुंतो। |

| | | |
|---|---|---|
| षष्ठी । | अमूस्स । | अमूण । |
| सप्तमी । | अमूस्सिं, अमूम्मि । | अमूसु । |

स्त्रीलिङ्गे प्रथमैकवचने 'अमू' 'अह' बहुवचने 'अमूओ' क्लीवस्यैकवचने 'अमुं' 'अह' बहुवचने 'अमूइं' इत्येवं स्यात् ।

---

## युष्मच्छब्दस्य रूपाणि ।*

| | एकवचनम् । | बहुवचनम् । |
|---|---|---|
| प्रथमा । | तुमं, तं । | तुज्झे, तुम्हे । |
| द्वितीया । | तं, तुमं । | तुज्झे, तुम्हे, वो । |
| तृतीया । | तइ, तए, तुमए, तुमे, ते, दे, तुमाइ । | तुज्झेहिं तुम्हेहिं, तुम्भेहिं । |
| पञ्चमी । | तत्तो, तइत्तो, तुमादो, तुमादु, तुमाहि । | तुम्हाहिंतो, तुम्हासुंतो । |
| षष्ठी । | तुमो, तुह, तुज्झ, तुम्ह, तुम्म ते, दे । | तुज्झाणं, तुम्हाणं, वो, भे । |
| सप्तमी । | तइ, तए, तुमए, तुमे, तुमम्मि । | तुज्झेसु, तुम्भेसु । |

---

* श्रीमदीश्वर-हेमचन्द्रप्रभृतिभिर्युष्मदस्मदोरेतदपेक्षया प्रायेण सर्वास्वपि विभक्तिषु अन्यानि च बहूनि रूपाणि स्वीकृतानि, वररुचिना तु विहदनादृततया अप्रामाणिकत्वाच्च तान्यत्र नाभिहितानीति। शौरसेन्यामपभ्रंशे च युष्मच्छब्दस्य प्रयोगतो यथायथमन्यानि च रूपाणि द्रष्टव्यानि ।

## अस्मच्छब्दस्य रूपाणि। *

| | एकवचनम्। | बहुवचनम्। |
|---|---|---|
| प्रथमा। | हं, अहं, अहअं। अहम्मि। | अम्हे। |
| द्वितीया। | अहम्मि, मं ममं। | अम्हे, णो। |
| तृतीया। | मइ, मए, ममाइ, मे। | अम्हेहिं। |
| पञ्चमी। | मत्तो, मइत्तो, ममादो, ममादु, ममाहि। | अम्हाहिंतो, अम्हासुंतो। |
| षष्ठी। | मे, मम, मह, मज्झ। | मज्झणो, अम्ह, अम्हाणं, अम्हे। |
| सप्तमी। | मइ, मए, ममम्मि। | अम्हेसु। |

---

## संख्यावाचकशब्दाः।

### द्विशब्दः। †

| | बहुवचनम्। |
|---|---|
| प्रथमा। | दो, दुवे, दोण्णि। |
| द्वितीया। | दो, दुवे, दोण्णि। |
| तृतीया। | दोहिं। |
| पञ्चमी। | दोहिंतो, दोसुंतो। |
| षष्ठी। | दोण्हं। |
| सप्तमी। | दोसु। |

* अस्मच्छब्दस्य मागध्यां शौरसेन्यामपभ्रंशे च एतदपेक्षया अन्यानि च बहुविधानि रूपाणि दृश्यन्ते, तानि तु प्रयोगतोऽनुसर्त्तव्यानीति।

† केचित्तु द्विशब्दस्थाने बिण्णि, वेण्णि, बिहि, वेहिंतो, वेण्ह, वेसु, इत्यादीनि रूपाणि स्वीकुर्वन्ति।

## त्रिशब्दः।

| | बहुवचनम्। |
|---|---|
| प्रथमा। | तिण्णि। |
| द्वितीया। | तिण्णि। |
| तृतीया। | तीहिं। |
| पञ्चमी। | तिहिंतो, तिसुंतो। |
| षष्ठी। | तिण्हं। |
| सप्तमी। | तीसु। |

## चतुर्शब्दः। *

| | बहुवचनम्। |
|---|---|
| प्रथमा। | चत्तारो, चत्तारि। |
| द्वितीया। | चत्तारो, चत्तारि। |
| तृतीया। | चऊहिं। |
| पञ्चमी। | चउहिंतो, चउसुंतो। |
| षष्ठी। | चतुण्हं। |
| सप्तमी। | चऊसु। |

---

* एतदतिरिक्तानां संख्यावाचकशब्दानामदन्तवत् रूपाणि विधेयानि। अतएव ग्रन्थकृता 'शेषोऽदन्तवत्'' (६।६०) इत्येवं सूत्रं व्यधायि। प्राकृतभाषायां व्युत्पित्सुना नाटकनाटिकात्रोटकप्रकरणादीन्यवश्याध्येतव्यानि, अन्यथा नैव कथमपि व्युत्पत्तिः स्यादिति।